यत्नः फलवान्भवति ॥ लघ्वर्थं चाध्येयं व्याकरणम् । बृहस्पतिरिंद्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच । नांतं जगाम । बृहस्पतिश्च वक्ता । इंद्रश्चाध्येता । दिव्यं वर्षसहस्रमध्ययनकालः । अंतं च न जगाम । अद्यत्वे[†] पुनर्यदि परमायुर्भवति स वर्षशतं जीवति । तत्र कुतः प्रतिपदपाठेन सकलपदावगमः । कुतस्तरां प्रयोगेण ॥ असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठंति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति । तत्र न ज्ञायते किं स्थूलानि पृषंति यस्याः सा स्थूलपृषती । किं वा स्थूला चासौ पृषती च स्थूलपृषतीति । तान्नावैयाकरणः स्वरतो ऽध्यवस्यति । यदि समासांतोदात्तत्वं तदा कर्मधारयः । अथ पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरिति ॥

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि । ते ऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुंक्ते । अविद्वांसः । विभक्तिं कुर्वंति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुण ॥ ते ऽसुराः । तेऽसुराः हेलयो हेलय इति कुर्वंतः पराबभूवुः । तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः । म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् ॥

दुष्टः शब्दः—

'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतो ऽपराधात् ॥
दुष्टाञ्शब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥

यदधीतम्—

'यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' ॥
अविज्ञातार्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥

---

[†] मैक्स० ग्रन्थे 'अद्यतु' इतिदृश्यते ।

यस्तु प्रयुंक्ते—

'यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले।
सो ऽनंतमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः॥

कः। वाग्योगविदेव। यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञाने ऽप्यधर्मः प्राप्नोति। अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दाः। अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवो ऽपभ्रंशाः। यथा गौरित्येतस्य शब्दस्य गावीगोणी गोपोतलिकेत्येवमादयः। अथ यो ऽवाग्योगविदज्ञानं तस्य शरणम्। विषम उपन्यासः। नात्यंतायाज्ञानं शरणं भवितुमर्हति। यो ह्यजानन्वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सो ऽपि मन्ये पतितः स्यात्। एवं तर्हि कः। अवाग्योगविदेव। अथ यो वाग्योगविज्ज्ञानं तस्य शरणम्॥

अविद्वांसः—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्॥

स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्॥

विभक्तिं कुर्वंति—

याज्ञिकाः पठंतिः—प्रयाजाः सविभक्तिका कार्या इति।

नचांतरेण व्याकरणं प्रयाजाः सविभक्तिकाःशक्याः कर्तुम्। तस्मादध्येयं व्याकरणम्॥

यो वा इमाम्—

यो वा इमां पदशः स्वरशो ऽक्षरशो वर्णशो वाचं विदधाति स आर्त्विजीनो भवति॥

श्चार्त्विजीनाः स्यामित्यध्येयं व्याकरणम् ॥

चत्वारि—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ॥

(ऋ० वेद ४, ५८, ३)

चत्वारि शृङ्गा चत्वारि पदजातानि। नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः। त्रयः कालाः भूतभविष्यद्वर्त्तमानाः। द्वे शीर्षे, सुपस्तिङश्च। सप्त हस्तासः। सप्त विभक्तयः। त्रिधा बद्धः। त्रिषु स्थानेषु बद्धः। उरसि कंठे शिरसि। वृषभो वर्षणात्कामानाम्। रोरवीति। रौतिः शब्दकर्मा। महो देवो मर्त्याँ आविवेश। महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणम्॥

अथवा चत्वारि—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंति ॥

(ऋ० वे० १, १६४, ४५)

ये मनीषिणः। मनस ईषिणो मनीषिणः। गुहायां त्रीणि निहितानि नेंगयंति न चेष्टंते। तुरीयं वाचो मनुष्या वदंति तुरीयं ह वा एतद्वाचो यन्मनुष्येषु वर्तते ॥

उत त्वः—

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः ॥

( ऋ० वे० १०, ७१, ४ )

अपि खल्वेकः पश्यन्नपि न पश्यति शृण्वन्नपि न शृणोत्येनाम्। अविद्वांसमाहार्धम्। त्वस्मै अन्यस्मै तन्वं विसस्रे। तनुं विवृणुते। जायेव पत्य उशती सुवासाः। यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते। एवं वाग्विदे स्वमात्मानं विवृणुते। वाङ्नो विवृणुयादित्यध्येयं व्याकरणम्॥

सक्तुमिव—

सक्तुमिव तितउना पुनंतो,यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानतेभद्रैषां लक्ष्मीर्निहिताधि वाचि॥

(ऋ०वे०१०,७१, २)

सक्तुः सचतेर्दुर्धावो भवति। कसतेर्वा स्याद्विपरीतस्य विकसितो भवति। तितउ परिपवनं भवति। ततवद्वा तुन्नवद्वा। धीराः प्रज्ञानवंतो ध्यानवंतः। मनसा प्रज्ञानेन वाचमक्रत वाचमकृषत। अत्रा सखायः सख्यानि जानते। सायुज्यानि जानते। क एष दुर्गमो मार्गः एकगम्यो वाग्विषयः के पुनस्ते। वैयाकरणाः। कुत एतत्। भद्रैषां वाचि निहिताधि वाचि। एषां वाचि भद्रा लक्ष्मीर्निहिता भवति*॥

सारस्वतीम्—

आहिताग्निरपशब्दं प्रयुंजानः प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति।

प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम्॥

---

*मैक्स ग्रन्थे ' लक्ष्मीर्लक्षणाद्भासनात् परिवृढा भवति ' इत्यपि दृश्यते।

दशम्यां पुत्रस्य—

दशम्यां पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यंतरंतस्थमभिनिष्ठांतं द्व्यक्षरं चतुरक्षरं वा कृतं नाम कुर्यान्न तद्धितांतमिति । न चांतरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् । तस्मादध्येयं व्याकरणम् ॥

सुदेवो असि—

सुदेवो असि वरुण यस्य ते सप्त सिंधवः ।
अनुक्षरंति काकुदं सूर्म्यं सुषिरामिव ॥ ऋ० वे० ८,६८,१२

सप्त सिंधवः । सप्त विभक्तयः । काकुर्जिह्वा । सास्मिन्विद्यत इति काकुदं तालु । *ऊर्मिः सूर्मिः स्थूला लोहप्रतिमेति' ॥ एवं 'सिद्धे शब्दार्थसंबन्धे' इत्यादिवार्तिकोक्तान्यत्रापि प्रयोजनान्यनुसंधेयानि ।

अथ निरुक्तप्रयोजनमुच्यते—अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम् । 'गौः ग्मा ज्मा क्ष्मा क्षा क्षमा' इत्यारभ्य 'वसवः वाजिनः देवपत्न्यो देवपत्न्यः' इत्यंतो यः पदानां समाम्नायः समाम्नातस्तस्मिन्ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते । एतावंति पृथिवीनामान्येतावंति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहितत्वात् । तदेतन्निरुक्तम् त्रिकांडम् । तच्चानुक्रमणिकाभाष्ये दर्शितम् —

'आद्यं नैघंटुकं कांडं द्वितीयं नैगमं तथा ।
तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्थितः ॥
गोराद्यपारपर्यंतमाद्यं नैघंटुकं मतम् ।
जहाद्युल्बसृबीसांतं नैगमं संप्रचक्षते ॥
अग्न्यादिदेवपत्न्यंतं देवताकांडमुच्यते ।

---

* मैक्स ग्रंथे० 'ऊर्मिः' इति नास्ति ।

अग्न्यादिदेवी ऊर्जाहुत्यंतः चितिगतो गणः ॥
वाय्वादयो भगांताः स्युरंतरिक्षस्य देवताः।
सूर्यादिदेवपत्न्यंता द्युस्थाना देवता इति' ।
गौरादिदेवपत्न्यंतं समाम्नायमधीयते' ॥

एकार्थवाचिनां पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघंटुशब्दः प्रसिद्धः। तादृशेष्वमरसिंहवैजयंतीहलायुधादिषु दश निघंटव इति व्यवहारात्। एवमत्रापि पर्यायशब्दसंघोपदेशादाद्यकांडस्य नैघंटुकत्वम्। तस्मिन्कांडे त्रयोऽध्यायाः। तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि। द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि। तृतीये तदुभयद्रव्यगत*बहुत्वह्रस्वत्वादिधर्मविषयाणि।

निगमशब्दो वेदवाची। यास्केन तत्र तत्रापि निगमो भवतीत्येव वेदवाक्यानामवतारितत्वात्। तस्मिन्निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन्कांड उपदिष्टत्वात्तस्य कांडस्य नैगमत्वम्।

पंचमाध्यायरूपस्य तृतीयकांडस्य दैवत्वं विस्पष्टम्।

पंचाध्यायरूपत्रयात्मक एतस्मिन्ग्रंथे परनिरपेक्षतया पदार्थस्योक्तत्वात्तस्य ग्रन्थस्य निरुक्तत्वम्। तद्व्याख्यानं च 'समाम्नायः समाम्नात' इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति'इत्यंतैर्द्वादशभिरध्यायैर्यास्को निर्ममे। तदपि निरुक्तमित्युच्यते। एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निःशेषेणोच्यंत इति व्युत्पत्तेः। तत्र हि चत्वारि पद जाता

*मैक्स ग्रन्थे तदुभय द्रव्यगत तनुबहुत्व० इति पाठः।

(१) निरुक्त १, ४।

नि नामाख्याते चोपसर्गनिपाताश्च' इति प्रतिज्ञाय 'उच्चावचेष्वर्थेषु निपतंति' इति निपातस्वरूपं निरुच्यैवमुदाहृतम्—'नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायम्। नेंद्रं देवममंसत' इति प्रतिषेधार्थीय इति। 'दुर्मदासो न सुरायाम्' इत्युपमार्थीय इति च। तत्र लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन् ग्रन्थे ऽवगम्यते। एवं ग्रन्थकारेणोक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मंत्रव्याख्यानावसर एवास्माभिरुदाहरिष्यंते। न च निर्वचनानां निर्मूलत्वं शंकनीयम्। एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषांचिदुक्तत्वात्। 'तदाहुतीनामाहुतित्वम्' इति। 'तमिदंद्रं संतमिंद्र इत्याचक्षत'[1] इति। 'यदप्रथयत्तत्पृथिव्याः पृथिवीत्वम्' इति च। ग्रन्थकारो ऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणान्युदाहरिष्यति। केषांचिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति। अत एव ग्रन्थकार[3] आह—तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च' इति। तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तम्॥

तथा छंदोग्रन्थो ऽप्युपयुज्यते। छंदोविशेषाणां तत्र तत्र विहितत्वात्। 'तस्मात्सप्त चतुरुत्तराणि छंदांसि प्रातरनुवाके ऽनूच्यंत' इति ह्याम्नातम्। गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीत्येतानि सप्त छंदांसि। चतुर्विंशत्यक्षरा गायत्री। ततोपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक्। एवमुत्तरोत्तराधिका अनुष्टुबादयो ऽवगंतव्याः। तथान्यत्रापि श्रूयते—'गायत्रीभिर्ब्राह्मणस्यादध्यात्। त्रिष्टुब्भी राजन्यस्य। जगतीभिर्वैश्यस्य' इति। तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छंदोग्रन्थमंतरेण न

---

(१) ऐ० आ० २, ४, ३,। (२) तै० ब्रा० १, १, ३, ७। (३) निरु० १, १५।

सुविज्ञेयः। किं च यो ह वा अविदितार्षेयच्छंदोदैवतब्राह्मणेन मंत्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति*गर्तं वा पात्यते †प्रमीयते वा पापीयान्भवति। तस्मादेतानि मंत्रे मंत्रे विद्याद्' इति श्रूयते। तस्मात्त-द्वेदनाय छंदोग्रन्थ उपयुज्यते ॥

ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रंथे ऽभिहितम्—यज्ञकालार्थसि-द्धय इति। कालविशेषविधयश्च श्रूयंते। 'संवत्सरमेतद्व्रतं चरेत्संवत्सरमुख्यं भृत्वा' इत्येवमादयः संवत्सरविधयः। 'वसंते ब्राह्मणो ऽग्निमादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत' इत्याद्या ऋतुविधयः। 'मासि मासि ‡सत्रपृष्ठान्युपयंति मासि मास्यतिग्राह्या गृह्यंते' इत्याद्या मास-विधयः। 'यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेत्'इत्याद्याः पक्षविधयः। '(१)एकाष्टकायां दीक्षेरन्फल्गुनीपूर्णमासे दीक्षेरन्' इत्याद्या-स्तिथिविधयः। 'प्रातर्जुहोति सायं जुहोति' इत्याद्याः प्रातःकालादि विधयः। (२)कृत्तिकास्वग्निमादधीत' इत्याद्या नक्षत्रविधयः। अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते।

एतेषां च वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदांगत्वं शिक्षायामेव मुदीरितम्—

छंदः पादौ तु वेदस्य हस्तौ कल्पो ऽथ पठ्यते।
शिक्षा घ्राणं तु वेदस्या मुखं व्याकरणं स्मृतम्।

---

* मेक्स० ग्रंथे 'गर्त्तं वा पद्यति' इति पाठः। †मैक्सग्र० प्रवामीयते इति दृश्यते। ‡मैक्स० ग्रन्थेमैक्स पुस्तके 'सत्र' इति नास्ति

---

(१) तै० सं० ७, ४, ८। १०। (२) तै० ब्र० १, १, २, १।

तस्मात्सांगमधीत्यैव ब्रह्मलोके महीयते' ॥ शि० ४१, ४२

षडंगवत्पुराणादीनामपि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते—

'पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'
'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति' ॥

इत्यन्यत्रापि स्मर्यते।

ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि हरिश्चंद्रनाचिकेत । द्युपाख्यानानि धर्मब्रह्मावबोधोपयुक्तानि तेषु तेष्वितिहासग्रन्थेषु स्पष्टीकृतानि। उपनिषदुक्ताश्च सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च।
वंशानुचरितं चेति पुराणं पंचलक्षणम्' ॥

इति सृष्टादेः पुराणप्रतिपाद्यत्वावगमनात् । न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतादीनां षोडशपदार्थानां निरूपणात्, तदनुसारेणेदं वाक्यमस्मिन्नर्थे प्रमाणं भवति नेतरदिति निर्णयः कर्तुं शक्यते। पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगो ऽतिस्पष्ट एव । मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसंध्यावंदनादिविषयः प्रपंचिताः। 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमंत्रिता आप ऊर्ध्वं विक्षिपंति'[1] इत्यादिकः संध्यावंदनविधिः। 'पंच वा एते महायज्ञाः सततं प्रतायंत'[2] इत्यादिको महायज्ञविधिः। एवं विध्यंतराणि द्रष्टव्यानिः उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद्विद्यास्थानत्वं युक्तम्। एते

---

(१) तै० आ० २, २, २। (२) तै० आ० २, १०।

पुराणादिभिश्चतुर्दशभिर्विद्यास्थानैरुपबृंहितायाः विद्याया ग्रहणेऽधिका-रिविशेषः शाखांतरगतैश्चतुर्भिर्मंत्रैरुपदर्शितः । तांश्च मंत्रान् यास्क उदाजहार—

तत्रायं प्रथमो मंत्रः—

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।

असूयकायानृजवे ऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्यमागत्यैवं प्रार्थयामास । हे ब्राह्मण मामनधिकारिणे ऽनुपदिश्य पालय । तवाहं निधिवत्पुरुषार्थहेतुरस्मि । तादृश्यां मयि *मदुपदेष्टरि त्वयि च यो ऽसूयां करोति यश्चार्जवेन विद्यां नाभ्यस्यति यो ऽपि स्नानाचमनाद्याचारनियतो न भवति तादृशेभ्यः शिष्याभासेभ्यो मा नं ब्रूयाः । तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयम् ।

अथ द्वितीयो मंत्रः—

'य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।

तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाह' ॥

पूर्वस्मिन्मंत्र आचार्यस्य नियममभिधायास्मिन्मंत्रे शिष्यस्य नियमो ऽभिधीयते । वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यम् । तद्विपरीतं सत्यं वेदवाक्यमवितथम् । तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावातृणत्ति सर्वतस्तर्दनं पूरणं करोति । उपसर्गवशादौचित्याच्च तृणत्तिधातोरर्थांतरे वृत्तिः । सर्वदा वेदं यः श्रावयतीत्यर्थः । किं कुर्वन्, अदुःखं कुर्वन् । मंदप्रज्ञस्य माणवकस्यादावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति तथा पादं पादैकदेशं वा ग्राहयन् । किं च । अमृतं संप्रयच्छन् । अमृतत्वस्य देवत्व†जन्मनो मोक्षस्य वा प्रापकत्वाद-

*मैक्सग्रन्थे 'त्वदुपदेष्टरि' इतिपाठः । †मैक्सग्रन्थे 'देवजन्मनो इतिपाठः ।

(१) निरु० २,४ ।

मृतं वेदार्थः । तस्य प्रदानं कुर्वन् । तं तादृशमाचार्यं सच्छिष्यो मुख्यमातापितृरूपं मन्येत। पूर्वसिद्धौ तु मातापितरावधमस्य मनुष्य-शरीरस्य प्रदानादमुख्यौ । तस्मै मुख्यमातापितृरूपायाचार्यायैकमपि द्रोहं न कुर्यात्।

अथ तृतीयो मंत्रः—

अध्यापिता ये गुरुं नाद्रियंते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्'॥

ये त्वधमा विप्रा गुरुणाध्यापिताः संतो विनयोक्त्या तदीयहित-चिंतनेन शुश्रूषया वा गुरुं नाद्रियंत आदररहितास्ते शिष्याभासा गुरोर्न भोजनीयाः। अनुभवयोग्या न भवंति । न हि तेषु गुरुः कृपां करोति। यथैव गुरुणा ते न पालनीयास्तथैव तानधमाञ्शिष्यांस्तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पालयति। फलप्रदं न भवतीत्यर्थः।

अथ चतुर्थो मंत्रः—

'यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्'॥

हे आचार्य यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः। किं च यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत्। तस्मै तु मुख्यशिष्याय त्वदीयनिधिपालकाय हे ब्रह्मन्वेदरूपां मां विद्यां ब्रूयाः। इत्थं विद्या देवतया प्रार्थितत्वादाचार्येण मुख्यशिष्याय वेदविद्योपदेष्टव्या॥

तदर्थमृग्वेदोऽस्माभिः षडंगानुसारेण व्याख्यायते।

इत्युपोद्घातप्रकरणम्



श्रीः

# प्रथमं मण्डलम्

## प्रथमं सूक्तम्

[१]मंत्रब्राह्मणात्मके वेदे ब्राह्मणस्य मंत्रव्याख्यानोपयोगित्वादादौ ब्राह्मण

अत्र केचिदाचचीरन्—न ब्राह्मणानां वेदसंज्ञा भवितुमर्हति। कुतः पुराणेतिहाससंज्ञकत्वाद्वेदव्याख्यानादृष्टिभिरुक्तत्वात्कात्यायनभिन्नैर्ऋषिभिर्वेदसंज्ञायामस्वीकृतत्वान्मनुष्यबुद्धिरचितत्वाच्चेति ॥ अपरे तु—ब्राह्मणानां पुराणेतिहाससंज्ञायां मानाभावः। अथवा 'स्वीकृतायामप्युक्तसंज्ञायां किं नश्छिन्नम्—कम्बुग्रीवादिमतः पदार्थविशेषस्य सत्यामपि कलशकुम्भाख्यायां घटनामधेयत्वमस्त्येव, 'वेदव्याख्यानत्वं' तेषां नैव वेदत्वबाधकं वेदव्याख्यानस्यापि वेदत्वात्। यथा 'अथ शब्दानुशासनम्' इत्यस्य व्याख्याया महाभाष्यत्वमस्त्येव। 'काव्यं यशसे' इति कारिकावृत्तेरपि तथैव काव्यप्रकाशत्वमेव। तथाच ग्रन्थकाराः प्रायः स्वयमेव सूत्रादिकं रचयित्वा तत्प्रतीकमादाय व्याख्यापयन्ति, न हि तत्रव्याख्यानतः सूत्रादिकस्य भेदः, अतो यदि व्याख्यानमपि भवेन्मंत्रस्य ब्राह्मणं तथापि वेदत्वे का क्षतिः। अत एव सूत्रस्य व्याकरणत्वसिद्धान्तेऽपि तद्व्याख्यानभूतभाष्यवृत्त्यादीनामपि व्याकरणत्वं सर्वैरेवाङ्गीक्रियते। अत एव त्रिमुनि व्याकरणमिति संगच्छते। ऋषि प्रोक्तत्वमपि मन्त्रब्राह्मणयोरुभयोः समानमेव। अत एव 'तेन प्रोक्तम्' (पाणि० ४, ३, १०१) इति सूत्रभाष्यं, 'य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च' इति वात्स्यायनभाष्यं च संगच्छते। प्रायः सर्वैरेव ऋषिभिः कात्यायनवत् तेषां वेदसंज्ञा स्वीक्रियत

एव । सर्व एव ब्राह्मणवाक्यान्यु द्दिश्य 'वेदे यथा' इति लिखन्ति । तद्यथा मनुनापि—

'उदितेनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्तते यज्ञ इतीयं वैदिकीश्रुतिः' ॥

इत्य ऐतरेयादिब्राह्मणभागमात्रोपलभ्यमानस्योदितादिहोमस्य वेदप्रोक्तता दर्शिता ॥ अतएव 'शेषे ब्राह्मणशब्दः' इति सूत्रे जैमिन्युक्त' शेषपदं संगच्छते । 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इतिसूत्रेपि ब्राह्मणभागस्याम्नायपदेनोपादानं जैमिनिना कृतंच ।

वाक्यविभागस्य चार्थग्रहणात् (न्या० २ आ० १ सू० ६१)

एतत्सूत्रभाष्ये वात्स्यायनर्षिणा 'प्रमाणं शब्दो यथा लोके । विभागश्च ब्राह्मणवाक्यानां त्रिविधः । ' इत्युपक्रम्य—

विध्यर्थवादानुवादवचनविनियोगात् । ( सू० ६२ )

'विधिर्विधायकः । (सू० ६३)

'स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः । (सू० ६४)

इति सूत्रत्रयं व्याख्याय—

'विधिविहितस्यानुवचनमनुवादः' (सू० ६५)

एतस्य व्याख्याने 'यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वम् । एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितु मर्हतीति' इत्यमुपसंहृतम् । तेन निश्चीयते ऋषिपुङ्गवस्यास्य 'मंत्रब्राह्मणयोर्वेदनामधेयम' एषैवेष्टिरिति । तेन 'कात्यायनभिन्नैर्ऋषिभि' रित्याद्यभिधानमार्षग्रन्थानवलोकनमूलकमेव ।

नैवास्ति ब्राह्मणेष्वपि मनुष्यबुद्धिरचितत्वं । मन्त्रवत् तत्रापि दृश्यत्वं ननु कृतकत्वम् प्रोच्यमानत्वंच । यथा लोकोपकारार्थं वेदाः प्रकाशिता-

स्तद्ब्राह्मणान्यपि । 'ऋषिर्दर्शनात्' नतुकर्तृत्वात् । यथा ते मन्त्रान्द्रष्टुस्तथार्थानपि ब्राह्मणरूपान् ॥

पुनरप्याग्रहग्रहग्रस्ताः पूर्वपक्षयन्ति—

'द्वितीया ब्राह्मणे' (पाणि० ४, ३, १०५ ।)

चतुर्थ्यर्थे बहुलं छन्दसि' ( पाणि० २, ३, ६२ )

'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (पाणि० ४, ३, १०५)

'छन्दोब्राह्मणानि च तद्विषयाणि' (पाणि० ४, २, ६६ ।)

इति सूत्रचतुष्टयेनुमीयते पाणिनिमुनेर्वेदसंज्ञातोब्राह्मणसंज्ञायाः पृथक्त्वमिष्टमन्यथा 'द्वितीया ब्राह्मणे' इत्यतो ब्राह्मणपदानुवृत्त्यैव सिद्धे 'चतुर्थ्यर्थे' इति सूत्रे छन्दोग्रहणं व्यर्थं स्यात्' । इति नैतत्संप्रदायाधीतसंस्कृतग्रन्थेषु शोभते । छन्दःपदस्य मंत्रब्राह्मणोभयवाचकत्वाद्ब्राह्मणपदाननुवृत्तौ मंत्रभागे प्रवृत्तिः कथं स्यात् । तस्मात् 'द्वितीया ब्राह्मणे' इति सूत्रं तु केवलं ब्राह्मणभाग एव प्रवर्तते; 'चतुर्थ्यर्थे' इति सूत्रं तु मन्त्रभागे ब्राह्मणभागे च, इति विषयभेदबोधनाय पृथगुपादानस्य न्याय्यत्वम् ।

'गुर्वध्ययनलब्धप्रतिभैस्तु ऋचि पदघटितसूत्राणां ऋक्ष्वेव प्रवृत्तिः, न यजुषि साम्नि वा, यजुषि पदघटितसूत्राणां यजुःष्वेव प्रवृत्तिः न साम्नि नाप्यृक्षु, 'यजुषि काठके' इति सूत्रं तु यजुःष्वपि कठकेष्वेव प्रवर्तते, नान्येषु यजुःष्वपि, एवमेव ब्राह्मणपदघटित सूत्रं केवलं ब्राह्मणेष्वेव प्रवर्तते न मन्त्रभागे, एवं मंत्रपदघटित सूत्रं मंत्रभाग एव प्रवर्तते न ब्राह्मणभागे. । छन्दःपदघटितसूत्रंतु मन्त्रब्राह्मणयोरुभयोरपि प्रवर्तते । अत एव 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' 'अवे यजः' विजुपे छन्दसि' एवमष्टाध्यायीपाठस्य सर्वत्रोपलभ्यमानत्वात् पूर्वसूत्रमंत्रपदे सत्यपि छन्दःपदं सार्थकं भवति इतिमन्यते ॥ भवन्मते तु

मन्त्रछन्दसोः समानार्थकत्वे छन्दःपदं व्यर्थमेव स्यात्। 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यत्र छन्दःपदे नैव ब्राह्मणानामपि ग्रहणे ब्राह्मणपदोपादानं व्यर्थं स्यात् इत्यपि गुर्वनध्ययनाविक्षतबुद्धित्वद्योतनाय, गुर्वध्ययनविक्षतबुद्धिभिस्तु 'नामाख्यातोपसर्गनिपाताश्च' इत्यत्र गोबलीवर्दन्यायेन विशेषवाचकपदसन्निधाने सामान्यवाचकपदानां तद्विशेषातिरिक्तपरत्वाङ्गीकारेण निपातपदस्योपसर्गातिरिक्तपरत्वमिव छन्दःपदस्य ब्राह्मणातिरिक्तपरत्वमङ्गीक्रियते। अतो न ब्राह्मणपदवैयर्थ्यम्। दृश्यते चान्यत्रापि पाणिनिमुनेरियं रीतिः। तथाहि 'तनादिकृञ्भ्य उः' इति सूत्रे कृञ्पदोपादानेन तनादिपदस्य कृञतिरिक्तपरत्वमङ्गीकृत्योभयोपादानम्। कृञ्पदस्य गणकार्यानित्यत्वज्ञापकता तु भाष्यादृष्टत्वादप्रमाणेव इति शेखरकृता स्पष्टीकृतम्। यथा वा 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' (पाणि० ३,३,१६१।) इत्यत्र प्रवर्तनात्वेन सर्वेषां साजात्येऽपि पृथगुपादानम्। तथाचोक्तम्—

'अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्'॥

इति॥ तत्र न्यायस्तु—विशेषवाचकपदसंनिधाने सामान्यवाचकपदानां तद्विशेषातिरिक्तपरत्वम्'इत्येवाङ्गीक्रियते। तस्य व्युत्पादनं 'गामानय बलीवर्दं चानय' इत्यादौ लोक आश्रितस्य शास्त्रे स्मरणमेव। प्रपञ्चार्थमित्यस्य स्पष्टार्थतायै पुनरुक्तावपि 'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते' इति भाष्योक्तरादोषाभावसूचनात्॥

यत्तु 'ब्राह्मणेषु याज्ञवल्क्यादीनां संवादकथनमितिहासत्वं

मारण्यकांडसहितं व्याख्यातम्। अथ तत्र तत्र ब्राह्मणोदाहरणेन मंत्रात्मक संहिताग्रंथो व्याख्यातव्यः । स च अग्निमीळे इत्यारभ्य यथा वः सुस-

---

च दृश्यते अतो वेदभिन्नत्वमेव तेषाम्—इति गदनम्। तदप्यकिंचित्करम्। वेदेपि सुदासोवसिष्ठस्यवसिष्ठविश्वामित्रयोरन्येषां च संवादा सन्त्येव, इतिहासोपि यथा कौशिकस्य'कुशिकस्य सूनुः' इत्यादौ। मान्मत्र 'कुशिको नाम राजा बभूव' इत्यादियास्काचार्यकथनमेव ।

अपौरुषेयत्वंतू भयोः समानम्। स्मर्यमाणकर्तृकत्वाभावात् । एवं वा 'अरे अस्य महतो भूतस्य' शतपथः १४, ४, ४, १, इति कथनाच्च। एषोत्र राद्धान्तः। 'वेदोऽखिलो धर्ममूलं' इति स्मृतिवचनान्निखिलवैदिकवाक्यानां धर्मप्रतिपादकत्वमायातम्। तच्च 'चोदनालक्षणोर्थो धर्मः' इति पूर्वमीमांसावचनेन न संगच्छते। यतो विधिवाक्येभ्य एव धर्मज्ञानमुदेति'अहरहः संध्यामुपासीत' 'स्वर्गकामो यजेत' 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिभ्यः। विधेस्तु मन्त्रभागे सद्भाव एव न। अतो ब्राह्मणेभ्य एव धर्मज्ञानं शक्यम् ॥ अतः

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः,

इत्यादौ श्रुतिपदं ब्राह्मणग्रन्थपरम् इति निश्चीयते । अत्रैकमत्यं बौद्धायन (मन्त्रब्राह्मणमित्याहुः) आपस्तम्ब ( मन्त्रब्राह्मणयो र्वेदनामधेयं) जैमिनि (मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः) प्रभृतीनाम् ॥

तथैव षड् गुरुशिष्यः सर्वानुक्रमणिकावृत्तिभूमिकायां—
'मन्त्रब्राह्मणयो राहु र्वेदशब्दं महर्षयः ॥
विनियोक्तव्यरूपो यः स मन्त्र इति चच्यते ।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि' ॥
इत्थं समादधति ॥

हासति' इत्यंतो ऽष्टकांडैर्दशमंडलैश्चतुःषष्ट्यध्यायैरीषदधिकसहस्रसूक्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभिर्दशसहस्रसंख्याभिर्ऋग्भिश्चोपेतः। तस्य च ग्रंथस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोगश्चेति। तत्राग्निमील इति सूक्तं प्रातरनुवाक आग्नेयक्रतौ विनियुक्तम्। स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खंडे सूचितः। अवानो अग्न इति षडग्निमीले ऽग्निं दूतमिति। तत्र हीनपादग्रहणात्सूक्तनिश्चयः। 'सूक्तं सूक्तादौ हीने पादे' इति परिभाषितत्वात्[1]। तस्मिन्सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतोयाज्यात्वेन विनियोगः। स च द्वितीयाध्यायस्य प्रथमखंडे सूचितः। साह्वान्विश्वा अभियुजो ऽग्निमीले पुरोहितमिति संयाज्ये इति॥ तत्र कृत्स्नपादग्रहणादृगित्यवगम्यते। 'ऋचं पादग्रहणे' इति परिभाषितत्वात्[2]। तथा संयाज्ये इत्युक्ते 'सौविष्टकृती प्रतीयात्' इति परिभाषितत्वात्[3] स्विष्टकृत्संबंधनिश्चयः। तत्रापि द्वितीयमंत्रत्वेनोदाहृतत्वाद्याज्यात्वम्। यद्यपि साह्वानित्यनया पुरोनुवाक्ययैव देवताया अनुस्मरणरूपः संस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशाध्याये चतुर्थपादे मीमांसितः—

'पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता।
विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात्।
पुरोनुवाक्यासमाख्यानाद्वचनाच्च समुच्चयः॥

देवताप्रकाशनकार्यस्यैकत्वाद्युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति चेत्। मैवम्। पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्याम-

---

(१) आ० १, १। (२) आ० १, १। (३) आ० २, १।

तरेणानुपपत्तेः। किं च। पुरोनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्ष-वचनेन देवतोपलक्षणहविःप्रदानकार्यभेदोक्तिपुरःसरं साहित्यं विधीयते। तस्मात्समुच्चय इति।

एतच्चाग्निमित्यादिसूक्तं नवर्चम्—'अग्निं नव मधुच्छंदा वैश्वामित्र' इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छंदोनामकस्तस्य सूक्तस्य द्रष्टृत्वात्तदीय ऋषिः। ऋषी गताविति धातुः। 'सर्वधातुभ्यइन्' उ० ४। १७। 'इगुपधात् कित्'। उ० ४। ११९। वेदप्राप्त्यर्थं तपो ऽनुतिष्ठतःपुरुषान्स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते—'अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्तदृषयो भवन्' इति—तै० आ० २। ९। तथा अतींद्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतोदर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते—

'युगांते ऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा'॥

ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

'अविदित्वा ऋषिं छंदो दैवतं योगमेव च।
यो ऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः'॥
'ऋषिच्छंदोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुंजानो मंत्रकंटक उच्यते'॥

वेदनविधिश्च स्मर्यते—

'स्वरो वर्णो ऽक्षरं मात्रा विनियोगो ऽर्थ एव च।
मंत्रं जिज्ञासमानेन वेदितव्यं पदे पदे'॥

'अग्निम्' इत्यादिसूक्तस्य छंदो ऽनुक्रमणिकायां यद्यप्यत्र नोक्तं

तथापि परिभाषायामेवमुक्तम्—‘आदौ गायत्रं[1] प्राग्घिरण्यस्तूपाद्’ इति । अनु० १२ । १४ । हिरण्यस्तूपाख्य ऋषिर्येषां मंत्राणां वक्ष्यते ततःप्राचीनेषु मंत्रेषु सामान्येन गायत्रं छंदइत्यर्थः । पुरुषस्य पापसंबंधंवारयितुमाच्छादकत्वाच्छन्द इत्युच्यते । तच्चारण्यकांडे समाम्नायते—‘छादयंति ह वा एनं छंदांसि पापात्कर्मणः’ इति । अथवा चीयमानाग्निसंतापस्याच्छादकत्वाच्छंदः । तच्च तैत्तिरीया आमनंति—‘प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत् । तं देवा बिभ्यतो नोपायन् । ते छंदोभिरात्मानं छादयित्वोपायन् । तच्छन्दसां छंदस्त्वम्’ इति तै० सं० ५ । ६ । ६ । १ । यद्वा अपमृत्युं वारयितुमाच्छादयतीति छंदः । तदपि छांदोग्योपनिषद्याम्नातम्—‘देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् । ते छंदोभिरात्मानमाच्छादयन् । यदेभिराच्छादयंस्तच्छन्दसां छंदस्त्वम्’ इति छां० उ० १ । ४ । २, ॥

तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्दः । एतदाम्नायते—‘दिवा वै नोभूदिति तद्देवानां देवत्वम्’ इति । अतो दीव्यतीति देवः । मंत्रेण द्योत्यत इत्यर्थः ।

प्रथममंडले प्रथमानुवाके त्रीणि सूक्तानि । तत्राद्यं नवर्चं सूक्तम् । अस्मिन्सूक्ते स्तूयमानत्वादग्निर्देवः । तथा चानुक्रमणिकायामुक्तम्—‘मंडलादिष्वाग्नेयमैंद्रात्’ अनु० १२ । १२, इति ।

तस्य सूक्तस्य प्रथमामृचं भगवान् वेद पुरुष आह—

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ १ ॥

---

(१) अत्र चतुर्विंशत्यक्षरं छन्दः । अतोस्य ‘आर्षीगायत्री’ इति संज्ञा त्रिपाच्चेदम् । पादश्चास्याष्टाक्षराणि । ‘प्राग् यजुषामार्ष्य’ इति पिङ्ग० । २ । १६ । ‘गायत्र्या वसवः’ पिङ्ग० ३ । इत्युक्तत्वात् ।

प०—अग्निं । ईळे । पुरःऽहितं । यज्ञस्य । देवं । ऋत्विजम् । होतारं । रत्नऽधातमम् ॥ १ ॥

अग्निनामकं देवमीळे स्तौमि। ईड स्तुतौ (धा २४। ८) इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः* । मंत्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते । कीदृशमग्निम्। यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति । तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा यज्ञस्य संबंधिनि पूर्वभाग आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्। देवं दानादिगुणयुक्तम्। होतारमृत्विजम् । देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते—'अग्निर्वै देवानां होता' ऐ० ब्रा० ३।१४ इति । पुनरपि कीदृशम्। रत्नधातमम् । यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति— 'अथातोऽनुक्रमिष्यामः। अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात्। अग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानः । अक्नोपनो भवतीति स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति । त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः । इतादक्ताद्दग्धाद्वा नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा । नीः परः । तस्यैषा भवति—अग्निमीळे' इति नि० ७, १४, । अस्यायमर्थः—सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनंतरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकांक्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः

* मैक्स० पुस्तके राजाराम ग्रन्थेच तथाच पठ्यते अज्मध्यस्थ डकारस्य ळकारं बह्वृचा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथा क्रममिति' इत्यधिकम्।

प्रथमं व्याख्यास्यते। कस्मात्प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः-एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणांतरम्—'अग्निः देवानां सेनानीः' इति। एतदेवाभिप्रेत्य बह्वृचा मंत्रब्राह्मणे आमनंति—अग्निर्मुखं प्रथमो देवतानाम्' इति मंत्रः ऐ० ब्रा०, १, ४, —'अग्निर्वै देवानामवम' इति ब्राह्मणम् ऐ० ब्रा० १, १, । तथा च तैत्तिरीया आमनंति—'अग्निरग्रे प्रथमो देवतानाम्' इति तै० ब्रा० २, ४, ३, ३, 'अग्निरवमो देवतानाम्' इति च। वाजसनेयिनस्त्वेवमामनंति—'स वा एषो ऽग्रे देवतानामजायत तस्मादग्निर्नाम' इति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात्प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्। संनममानः सम्यक्स्वयमेव प्रह्वीभवन्नंगं स्वकीयं शरीरं नयति काष्ठदाहे हविःपाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्। स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्नि शब्दं निर्वक्ति। तत्र न क्नोपयतीत्युक्ते न स्नेहयति किं तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारोधातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इत इण्गतौ। इतिधातुः। धा० १४, ३६, अक्तो ऽञ्जू व्यक्तिम्रक्षणकांतिगति षु। इति धातुः। धा० २९, २१, दग्धो दह भस्मीकरण इति धातुः धा० २३, २२,। नीतो णीञ् प्रापण इति धातुः, धा० २२, ५,। अग्निशब्दो ह्यकारगकारनीशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते। अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते। यद्वा दहतिधातुजन्याद्दग्धशब्दादगकारमादत्ते। नीरिति नयतिधातुः। स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वाग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमगं नयति काष्ठदाहे हविःपाके च प्रेरयतीति समुदायार्थः। तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनायैषाग्निमीळ इत्यृग्भवतीति।

तामितामृचं यास्क एवं व्याख्यातवान्—'अग्निमीळे अग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातः। यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा । यो देवः सा देवता । होतारं ह्वातारम् । जुहोतेर्होतेत्यौर्णवाभः । रत्नधातमं रमणीयानां धनानां दातृतमम्' इति नि० ७, १५,। अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम् । धातूनामनेकार्थत्वमिति न्यायमाश्रित्य याञ्चाध्येषणपूजाअप्यत्रोचितत्वात्तदर्थतया व्याख्याताः । पुरोहितशब्दो-द्वितीये ऽध्याये 'नि० २,१२' 'यद्देवापिः शंतनवे पुरोहितः' इत्येतामृचमुदाहृत्य पुर एनंदधति'इति व्याख्यातः । तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनं दधत इत्यामनंति । देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे । यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोरेकार्थत्वे ऽप्यस्ति धातुभेदः । यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान्प्रति हविर्वहनाद्द्युस्थानो भवति । देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति । और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम् । रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः । रमणीयत्वाद्रत्नत्वम् । दधातिधातुरत्र दानार्थवाचीति । तदिदं निरुक्तकारस्य यास्कस्य मंत्रव्याख्यानम् ।

अथ व्याकरणप्रक्रियोच्यते। अगिधातोर्गत्यर्थाद् धा० ५, ३८ 'अंगेर्नलोपश्च' उ० ४, ५०, इत्यौणादिकसूत्रेण निप्रत्ययः। इदित्वान्नुमागमेन प्राप्तस्य (पा०७,१, ५८)नकारस्य लोपश्च भवति। अंगति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' (पा० ६,१,१६२) इत्यकार उदात्तः।

'आद्युदात्तश्च'(पा० ३,१ १५२) इति प्रत्ययगत इकारो ऽप्युदात्तः 'अनुदात्तं पदमेकवर्जम्' (पा० ६, १, १५८) इति द्वयोरन्यतरमुदात्तमवशिष्येतरस्यानुदात्तत्वं प्राप्तम्। तत्र धातुस्वरे प्रथमतो ऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरो ऽवशिष्यते । सतिशिष्टस्वरो बलीयान् । (पा० ६, १, १५८) । इति हि न्यायः । ततो ऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ सुप्पितौ' (पा० ३,१,४) इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम् । तस्य 'अमिपूर्वः'(पा० ६, १, १०७ । इति यत्पूर्वरूपं तदुदात्तम् 'एकादेश उदात्तेनोदात्त.' । पा० ८, २. ५, इति सूत्रितत्वात् । अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या मतद्वयं यास्केन प्रदर्शितम्—नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च । न सर्वाणीति गार्ग्यो वैयाकरणानां चैक इति । नि० १, ११०, । गार्ग्यस्यमते ऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषों ऽन्तउदात्तः' (फि० १, १) इत्यंतोदात्तत्वम् । पूर्वोक्ते ष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया । एतदेवाभिप्रेत्य यास्क आह—'अथ निर्वचनम् तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्विते ऽर्थे ऽप्रादेशिके विकारे ऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्ये ऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्' इति नि० २, १, । अस्यायमर्थः—तत्र निर्वचनीयपदसमूह मध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसङ्गौ स्याताम् । स्वर उदात्तादिः । संस्कारो निप्रत्ययादिः । किंच तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः । तत्र भवो गुणो गतिरूपोऽर्थः । तेनान्वितौ । तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात् । तच्च निर्वचनमस्माभिः प्रदर्शितम् । अथ पूर्वोक्तवैलक्षण्येन कश्चित्स्वेन विवक्षितो ऽर्थो नान्वितस्तस्मिञ्शब्दे ऽनुगतो न भवेत् । तस्यैव व्याख्यानम्—अप्रादेशिके विकार

इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। सच प्रदेशेनाग्निशब्दैकदेशेनाच नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षिते ऽर्थे नियतो निर्बंधवान्ब्राह्मणानुसारेण वा देवतांतरविशेषणत्वेन योजयितुं वा सनिर्बंधस्तदानीं स पुमान्केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत तस्मिंशब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते। अग्निशब्दस्यादावकारो ऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकारेण वर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति॥

ईळ इत्येतत्पदं कृत्स्नमप्यनुदात्तम्। 'तिङ्ङतिङः'। (पा० ८, १, २८) इत्यतिङ्ङंतादग्निशब्दात्परस्येळ इत्यस्य तिङ्ङंतस्य निघातविधानात्। पदद्वय संहिताकाले त्वीकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' (पा० ८, ४, ६६) इति स्वरितत्वम्। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात्संहितायामनुदात्तानाम्' (पा० १, २, ३९) इत्येकश्रुत्यं प्रचयनामकं भवति। पुरःशब्दों ऽतोदात्तः। 'अयं पुरो भुवः' (तै० सं० ४,३,२, १) इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा० ५, ३, ३९)। इति पूर्वशब्दादस्प्रत्ययः पुरादेशश्च। ततो ऽत्र प्रत्ययस्वरः। (पा० ३, १, ३)। धाञो निष्ठायां 'दधातेर्हिः' (पा० ७,४,४२) इत्यादेशे सति प्रत्ययस्वरेणांतोदात्तो हितशब्दः। तत्र समासांतोदात्तत्वे प्राप्ते (पा० ६, १, २२३) तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ' (पा० ६, २, २) इत्यादिना अव्यय पूर्वपदप्रकृतिस्वरत्वम्। यद्वा 'पुरो ऽव्ययम्' (पा० १,४,६७) इति गति संज्ञायां 'गतिरनंतरः' (पा० ६, २, ४९) इति पूर्वपदप्रकृतिस्वरत्वम्।

तत ओकार उदात्तः अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयप्राप्तौ (पा० १, २, ३९) 'उदात्तस्वरितपरस्य सन्नतरः' (पा० १, २, ४०) इत्यतिनीचो ऽनुदात्तः। 'यजयाच' (पा० ३, ३, ९०) इत्यादिना यजतेर्नङ्प्रत्यये सत्यंतोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति (पा० ३, १ ४,) पश्चात्स्वरितत्वम्। देवशब्दः पचाद्यजंतः (पा० ३, १, १३४)। सच फिट्स्वरेण (फि० १, १,) प्रत्ययस्वरेण (पा० ३। १, ३) चित् स्वरेण (पा० ६, १, १६३) वांतोदात्तः। ऋत्विक्शब्द ऋतौ यजतीति विग्रहे सति 'ऋत्विग्दधृग' (पा० ३, २, ५९) इति निपातितः। 'गतिकारकोपपदात्कृत्' (पा० ६, २, १ इति कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययांतो (पा० ३, १, १३५) नित्स्वरेणा (पा० ६, १, १९७) द्युदात्तः। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो 'नब्विषयस्यानिसंतस्य' (फि०२,३) इत्याद्युदात्तः। तथा चाम्नायते—'रत्नं धाता' इति। रत्नानि दधातीति विग्रहः। समासत्वादंतो दात्तोरत्नधाशब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्प्रत्ययस्य (पा०५,३,५५) पित्स्वरेणानुदात्ते सति (पा० ३, १, ४) स्वरितप्रचितौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वमिति।

वेदावतार आद्याया ऋचो ऽर्थश्च प्रपंचितः।
विज्ञातं वेदगांभीर्यमथ संक्षिप्य वर्ण्यते॥

आग्नेयसूक्तस्य द्वितीयामृचमाह—

मं०—अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवाँ एह वक्षति ॥ २ ॥

प०—अग्निः । पूर्वेऽभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत । सः । देवान् । आ । इह । वक्षति ॥ २ ॥

अयमग्निः पूर्वेभिः पुरातनैः भृग्वंगिरःप्रभृतिभिः ऋषिभिरीड्यः स्तुत्यः नूतनैरुत इदानींतनैरस्माभिरपि स्तुत्यः । सो ऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आ वक्षति । वह प्रापण इति धातुः । आवहत्वित्यर्थः ।

पूर्वेभिरित्यत्र 'बहुलं छंदसि' (पा० ७,१,१०)इति भिस ऐसादेशाभावः । पूर्व पर्व मर्व पूरण इति धातुः । पूर्वतिधातोरन्प्रत्यय औणादिकः । इन्प्रत्ययांत ऋषिशब्दः । 'ऋष्यंधक' (पा० ४, १, ११४, ) इति निपातनात् लघूपधगुणाभावः (पा० ७, ३,८६) । कित्प्रत्ययो वात्र ज्ञेयः (उ० ४, ३१९) । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यप्रत्ययांतत्वात् (पा० ३,१,१२४) 'तित्स्वरितम्' (पा० ६,१,१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवंद' (पा०६,१,२१४) इत्यादिनाद्युदात्तत्वम् । 'नवस्य नू त्नप्तनखाश्च' (पा० ५, ४, ३०,६ ) इति वार्तिकेन नवशब्दस्य नू इत्यादेशस्तनन्प्रत्ययश्च महावार्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनांतेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वे-

नानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । उच्चावचेष्वर्थेषु पतंतीति निपातत्वम्। तर्हि 'निपाता आद्युदात्ताः' (फि० ४, १२) इत्युकारस्योदात्तःप्राप्त इति चेत्। न । प्रातःशब्दवदंतोदात्तत्वात् । यथा प्रातःशब्दों ऽतोदात्तत्वेनैव स्वरादिषु पठित (पा० १, १, ३७)। एवमुतशब्दस्यापि पाठो द्रष्टव्यः स्वरादेराकृतिगणत्वात्। यद्वा 'एवादीनामंतः' (फि० ४, १४) इत्यंतोदात्तः। स इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत्। देवानित्यस्य नकारस्य संहितायां 'दीर्घादटि' (पा० ८,३,९) इति रुत्वम् । 'अत्रानुनासिकः' (पा० ८,३,२) इत्यनुवृत्तौ 'आतोऽटि नित्यम्' (पा० ८, ३, ३६) इत्याकारः सानुनासिकः। 'भोभगो' (पा० ८,३,१७) इति रोर्यकारः। स च 'लोपः शाकल्यस्य' (पा० ८,३,१९) इति लुप्यते। तस्यासिद्धत्वात् (पा० ८, २, १,) न पुनः संधिकार्यम्। आङो निपातत्वादाद्युदात्तत्वम् । इदमो हप्रत्यये सति निष्पन्नत्वाद् (पा० ८, ३, ११) इह शब्दे प्रत्ययस्वरः । वहतिधातोर्लोडर्थे छांदसो लृट्। स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छांदसः। यद्वा लेटि 'सिब्बहुलम्'(पा०३,१,३४) इति सिप्प्रत्ययः । 'लेटोऽडाटौ' (पा० ३,४, ९४) इत्यडागमश्च। वक्षतीति संपद्यते। तस्य तिङ्ङंतत्वान्निघातः । संहितास्वराः पूर्ववत्॥

आधाने तृतीयेष्टौ प्रथमाज्यभगस्यानुवाक्या आ० २,१ सूक्तगता तृतीया।

तां तृतीयामृचमाह ।

मं०—अग्निना रयिमश्नवत्पोषमेव दिवेदिवे।

यशसं वीरवत्तमम् ॥ ३ ॥

प०—अग्निना। रयिं। अश्नवत्। पोषं। एव। दिवेऽदिवे।

यशसं। वीरवत्ऽतमम् ॥ ३ ॥

यो ऽयं होत्रा स्तुत्यो ऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्प्राप्नोति। कीदृशं रयिम्। दिवेदिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव। न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तम्। वीरवत्तममतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः संपद्यंते।

रयिशब्दो मघमित्यादिधननामसु पठितः। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोप'(पा० ३,४,९७)इतीकारलोपः। 'लेटो ऽडाटौ' (पा० ३, ४, ९४) इत्यडागमः। ततो ऽश्नवदिति भवति। तस्य निघातः घञंतत्वात् (पा० ६, १,१९७) पोष शब्द आद्युदात्तः। एवशब्दस्य निपातत्वे ऽपि 'एवादीनामंत' (फि०४,१४) इत्यंतोदात्तत्वम्। वकारांताद्दिवशब्दात्परस्याः सप्तम्याः 'सुपां सुलुक्' (पा० ७, १, ३९) इत्यादिना शेभावे सति 'सावेकाच' (पा० ६, १, १६८) इत्यादिना 'ऊडिदंपदादी' (पा० ६, १, १७१) त्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' (पा० ८, १, ४) इति 'द्विर्भावे सत्युत्तरभागस्यानुदात्तंच' (पा० ८, १, ३) इत्यनुदात्तत्वम्। यशो ऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्यो ऽच्' (पा० २ १२७)। इत्यच् प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणांतोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः। पित्त्वादनुदात्तत्वम्। ह्रस्वनुड्भ्यां। (पा० ६,१,१७६) इति तु न *सावर्णान्तत्वात् 'नगोश्वन' (पा० ६,१,१८२) इति प्रतिषेधः।

अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्याग्नेयं यज्ञमित्यादिको वैकल्पिको ऽनुरूपस्तृचः। एतच्च सप्तमाध्याय एकाहेष्वित्या-

---

* इति मैक्स० ग्रन्थेधिकम्।

दिखंडे सूचितम् 'अग्निं वो वृधंतमग्ने यं यज्ञमध्वरम्,। (आ० ७,८) इति। †तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी।

तामेतां चतुर्थीमृचमाह—

मं०—अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि।
स इद्देवेषु गच्छति॥ ४॥

प०—अग्ने। यं। यज्ञं। अध्वरं। विश्वतः। परिऽभूः। असि। सः। इत्। देवेषु। गच्छति॥ ४॥

हे अग्ने यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि स इत् स एव यज्ञो देवेषु तृप्तिं जनयितुं स्वर्गं गच्छति। प्राच्यादिचतुर्दिगंतेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति। परिशब्देन होत्रियादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्। अध्वरं हिंसारहितम्। नह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवंति।

अग्निशब्दस्य षाष्ठिकम् (पा० ६, १, १९८) आमंत्रिताद्युदात्तत्वम्। न विद्यतेऽध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्'। (पा० ६,२,१७२) इत्यंतोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' (पा० ६, १, १९३) इत्युदात्तत्वम्। परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते (पा० ६, २, २)। तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् (पा० ६,२,१३९)। असीति तिङंतस्य 'यद्वृत्तान्नित्यम्' (पा० ८, १, ६६) इति निघाताभावः॥

† इति मैक्स० ग्रंथे नास्ति।

अथ पंचमीमृचमाह ।

मं०—अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ॥ ५ ॥

प०—अग्निः । होता । कविऽक्रतुः । सत्यः । चित्र-
श्रवःऽतमः । देवः । देवेभिः । आ । गमत् ॥ ५ ॥

अयमग्निर्देवो ऽन्यैर्देवैर्हविर्भोजिभिः सहागमदस्मिन्यज्ञेसमागच्छतु । कीदृशो ऽग्निः । होता होमनिष्पादकः । कविक्रतुः । कविशब्दो ऽत्र क्रांतवचनो न तु मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रांतप्रज्ञः क्रांतकर्मा वा । सत्यः अनृतरहितः । फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः । श्रूयत इति श्रवः कीर्तिः । अतिशयेन विचित्रकीर्तियुक्तः ॥ कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम्* । लोडंतस्य गच्छत्विति शब्दस्य छत्वाभाव उकारलोपश्च छांदसः ततो रूपं गमदिति भवति । स्पष्टमन्यत् ॥

†इत्यृक्संहितायां वेदार्थप्रकाशे प्रथमकांडस्य प्रथमाध्याये प्रथमो वर्गः ॥

---

* मैक्स० पुस्तके 'सत्सु साधुः सत्यः 'सत्यादशपथे' (पा० ५, ४, ६६) । इत्यत्रान्तोदात्तो हरदत्तेन निपातितः' इत्यधिकः पाठः ।

† इति मैक्स० ग्रंथे नास्ति ।

आग्नेये सूक्ते षष्ठीमृचमाह ।

मं०—यदंग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमंगिरः ॥ ६ ॥

प०—यत् । अङ्ग । दाशुषे । त्वं । अग्ने । भद्रं । करिष्यसि । तव । इत् । तत् । सत्यं । अङ्गिरः ॥ ६ ॥

अंगेत्यभिमुखीकरणार्थो निपातः । अङ्गाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत्तवैव । सुखहेतुरिति शेषः । अंगिरो अग्ने । एतच्च सत्यं न त्वत्र विसंवादो ऽस्ति । यजमानस्य वित्तादि-संपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्या-यनिनः समामनंति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम्' इति ।

अङ्गशब्दस्य निपातत्वे ऽपि (फि० ४, १२) । अभ्यादित्वादंतोदात्त-त्वम् । 'दाश्वान्साह्वान्' (पा० ६,१,१२) इति सूत्रेण 'दाशृ दाने' इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः । आमंत्रितस्याग्नि शब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं (पा० ८, १, १९) न शंकनीयम् 'अपादादौ' (पा० ८, १, १८) । इति पर्युदस्तत्वात् । ततः षाष्ठिकम् । (पा० ६, १, १९८) आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन (फि० २,३) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' इति धातोरुपरि रक्प्रत्ययेन निपातनादंतोदात्तत्वम् । अस्मिन्वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदि-

ष्यंत' (पा० ८, १,३०), इति निघाते प्रतिषिद्धे स्य प्रत्ययस्वरेण (पा० ३, १, ३)। सति शिष्टेन करिष्यसिशब्द उपांत्योदात्तः। तवेत्यत्र 'युष्मदस्मदोर्ङसि' (पा० ६, १, २२१)। इत्याद्युदात्तत्वम्। 'अंगिरा अङ्गारा' (नि० ३, १७) इति यास्कः। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनंति—'ये ऽङ्गारा आसंस्ते ऽङ्गिरसोऽभवन्' (ऐ० ब्र० ३, ३४) इति। तस्मादंगिरोनामकमुनिकारणत्वादंगाररूपस्याग्नेरंगिरस्त्वम्। अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम्॥

अग्नीषोमप्रणयने 'उप त्वाग्ने' इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे समाम्नातम्—'उप त्वाग्ने दिवेदिव उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह' (ऐ० ब्रा० १, ३०) इति। *तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी। तामेतां सप्तमीमृचमाह।

मं०—उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्।
नमो भरंत एमसि॥ ७॥

प०—उप। त्वा। अग्ने। दिवेऽदिवे। दोषाऽवस्तः। धिया। वयम्। नमः। भरंतः। आ। इमसि॥ ७॥

हे अग्ने वयमनुष्ठातारो दिवेदिवे प्रतिदिनं दोषावस्ता रात्रावहनि च धिया बुद्ध्या नमो भरंतो नमस्कारं संपादयंत उप समीपे त्वा एमसि त्वामागच्छामः।

उपशब्दस्य निपातस्वरः (फि० ४, १२)। 'त्वामौ द्वितीयायाः'।

* इति मैक्स० ग्रन्थेन दृश्यते।

(पा० ८, १, २३) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्तरित्यहर्वाची। द्वंद्वसमासे कार्तकौजपादित्वात् (पा० ६, २, ३७) आद्युदात्तः। 'सावेकाच' (पा० ६,१,१६८)। इति धियो विभक्तिरुदात्ता। नम इति निपातः। भरंत इत्यत्र शपः (पा० ३, १, ६८) पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति (पा० ६, १, १६) धातुस्वरः शिष्यते। इमसीत्यत्र' इदंतो मसि' (पा० ७,१,४६) इत्यादेशो-निघातश्च।

अष्टमीमृचमाह।

मं०—राजंतमध्वराणां गोपामृतस्य दीदिविम्।

वर्धमानं स्वे दमे ॥ ८॥

प०—राजंतं। अध्वराणां। गोपां। ऋतस्य। दीदिविम्।

वर्धमानं। स्वे। दमे ॥ ८॥

पूर्वमंत्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्। राजंतं दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम्। ऋतस्य सत्यस्यावश्यं भाविनः कर्मफलस्य दीदिविं पौनः-पुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भि-र्वर्धमानम्।

राजंतं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते। दीदिवि-शब्दस्य 'अभ्यस्तानामादिः' (पा०६,१,१८९) इत्याद्युदात्तत्वम्। दमशब्दो वृषादित्वात् (पा० ६, १, २०३) आद्युदात्तः।

नवमीमृचमाह

मं०—स नः पितेव सूनवेऽग्ने सूपायनो भव।

सचस्वा नः स्वस्तये ॥ ९ ॥

प०—सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः।

भव। सचस्व। नः। स्वस्तये ॥ ९ ॥

हे अग्ने स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव। तथा नोऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव। तत्रोभयत्र दृष्टांतः। यथा सूनवे पुत्रार्थं पिता प्रायेण समवेतो भवति तद्वत्।

अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्' (पा० ८, १, १८) इत्यनुदात्तत्वम्। 'चादयोऽनुदात्ताः' (फि० ४, १६) इतीवशब्दोऽनुदात्तः। 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं वक्तव्यम्' (पा० २,१,४, २) इति समस्तः पितेवेति शब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६। २। १७२) इत्यंतोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः (पा० ८। १। १९)। लसार्वधातुकानुदात्तत्वे (पा० ६। १। १८६) सति धातुस्वरावशेषः।

*इति प्रथमस्य प्रथमे द्वितीयो वर्गः ॥



* इति मैक्स० ग्रन्थे नास्ति।

# ऋ० वे० मं० १ सू० १३

—*—*—

## ( द्वितीयं सूक्तम् )

'सुसमिद्ध' इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तम्। तस्य काण्वो मेधातिथिर्ऋषिः। गायत्रं छन्दः। प्रत्यृचं प्रतीयमानाः सुसमिद्धतनूनपादादिका द्वादश देवताः। तथा चानुक्रमणिकायामृक्संख्यामृषिं छन्दश्चानुवृत्तिवलात्सिद्धवत्कृत्य देवता उदाहृताः 'सुसमिद्ध इतीध्मः समिद्धोवाग्निस्तनूनपान्नराशंस इलोवर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीलाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तम्'इति॥ विनियोगस्तुपशौ सुसमिद्धो न आवहेतिकाण्वमाप्रीसूक्तम्। एकादश प्रयाजा इति खण्डे सूत्रितम्—'समिद्धो अद्येति सर्वेषां यथर्षि वा' (आ० ३, २) इति।

मं०—सुसमिद्धो न आवह देवाँ अग्ने हविष्मते।
होतः पावक यक्षि च ॥ १ ॥

प०—सुऽसमिद्धः। नः। आ। वह। देवान्। अग्ने। हविष्मते। होतरिति। पावक। यक्षि। च ॥ १ ॥

भा०—हे अग्ने सुसमिद्धनामकस्त्वं नोऽस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थं देवानावह हे पावक शोधक होतः होमनिष्पाद-

काग्ने यच्चि च यज च ॥ सुसमिद्धः समः क्रियाविशेषणत्वेन गतिसंज्ञकत्वात् प्रादिसमासः । शोभनवाचिनः सु शब्दस्य तु 'विशेषणं विशेष्येण बहुलम्' (पा० २ । १ । ५७) इतिसमिद्धपदेन कर्मधारयसमासः। सुशब्दः प्रातिपदिकस्वरेणोदात्तः 'कर्मधारयेऽनिष्ठा' (पा० ६ । २ । ४६) इति पूर्वपदप्रकृतिस्वरत्वम् क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात् प्रादिसमासे 'गतिरनन्तरः' (पा० ६ । २, ४९) इति समो यदुदात्तत्वम् तदेव कृदुत्तर पदप्रकृतिस्वरत्वेन स्थास्यतीति सुशब्दोऽनुदात्तः स्यात् । देवान् अग्ने पूर्ववद्रुत्वानुनासिके । हविष्मते हविरस्यास्तीति मतुप् 'तसौ मत्वर्थे' (पा० १ । ४ । १९) इति भत्वेन पदत्वस्य बाधितत्वान्न रुत्वम् । होतः पावकशब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्परमसामर्थ्यात्पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् । न च द्वितीयस्यामन्त्रितस्याष्टमिकनिघातेनैकस्वर्यम् 'आमन्त्रितं पूर्वमविद्यमानवत्'(पा० ८,१,७२)इति पूर्वस्याविद्यमानवत्वेन पदात्परत्वाभावात्पादादित्वाच्च परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वे समानमेवाविद्यमानत्वम् । अत एवाविद्यमानवत्वात्सामर्थ्येऽपि न पराङ्गवद्भाव इति नैकस्वर्यसिद्धिः । अतो होतरिति विशेष्यम् । अतः पुनातीति पावक इत्यन्वयप्रसिद्धिस्वीकारेण विशेषणत्वाद्धोतरितिविशेष्यम् तच्च सामान्यवचनमिति 'नामन्त्रिते समानाधिकरणे' (पा० ८,१,७३)इत्यविद्यमानवत्वप्रतिषेधात् पदात्परत्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेन वा पराङ्गवद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः । यच्चि यजेर्लोटः सिपि 'बहुलं छन्दसि' (पा० २ । ४ । ७३)इतिशपोलुक् । 'व्रश्चादिना' (पा० ८, २, ३६) षत्वम्, 'षढोः कः सि'(पा० ८ । २ । ४१)इति कत्वम् । सेर्हिरादेशश्छान्दसत्वान्न भवति । सिपःपित्वेनानुदात्तत्वाद्धातुस्वर एव शिष्यते नच 'तिङ्ङतिङः' (पा० ८, १ । २८) इति निघातः, पूर्वस्य पावकेत्यामन्त्रितस्याविद्यमानवत्वेनपदादपरत्वात् । अतएव तस्याव्यवधायकत्वेन होतरित्यपेक्ष्य निघात स्यादितिचेत् न । यच्चिपदापेक्षयाहोतरित्यस्यापि पूर्वत्वेनाविद्यम

त्। ननु 'नामन्त्रिते समानाधिकरणे' (पा० ८। १। ७३) इतितस्यनिषिद्धमविद्यमानवत्वम् नच पावकपदस्याविद्यमानवत्वेन समानाधिकरणपरत्वाभावः। यह्विपदस्यैव हि कार्य्यं प्रति पावकपदं पूर्वत्वादविद्यमानवत्स्यात्। होतः पदकार्य्यमविद्यमानवत्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमानवत्वप्रतिषेधः। अतस्तस्य विद्यमानवत्वात्तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव। सत्यम्। अत्र यक्षीत्यस्य चशब्दपरत्वात्। 'चादिषुच' (पा०८ १। ५८) इति निघातप्रतिषेधो भविष्यतीति न दोषः॥ १०॥

द्वितीयामृचमाह—

मं०—मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे।
अद्या कृणुहि वीतये॥ २॥

प० — मधु ऽमन्तम्। तनूऽनपात्। यज्ञम्। देवेषु। नः। कवे। अद्य। कृणुहि। वीतये॥ २॥

भा०—हे कवे मेधाविन् अग्ने तनूनपादेतन्नामकस्त्वमद्यास्मिन् दिने नोऽस्मदीयं मधुमन्तं रसवन्तं यज्ञं हविः वीतये भक्षणार्थं देवेषु कृणुहि कुरु प्रापयेत्यर्थः॥ मधुमन्तं 'फलिपाटिनमिमनिजनां गुक् पटिनाकिधतश्च' (उ० १,१८) इति मन्यते रुप्रत्ययो धकारश्चान्तादेशः। निदित्यनुवृत्तेः प्रत्ययस्य नित्वादाद्युदात्तो मधुशब्दः। तनूनपात् आमन्त्रितनिघातः। अद्य 'सद्यः परुद्' इत्यादिना' (पा० ५। ३। २२) अस्मिन् काले इत्यर्थे द्य प्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः। 'तद्धितश्चासर्वविभक्तिः' (पा० १। १। ३८) इत्यव्ययत्वात् 'अव्ययादा-

( पा० ५ । ३ । १८ ) इति दानींप्रत्ययः । 'इदम इश्' ( पा० ५ । ३ । ३ ) इतीदम्शब्दस्येशादेशः । प्रत्ययाद्युदात्तत्वम् । सूर्यः 'षू प्रेरणे' सुवतीति सूर्यः । 'राजसूयसूर्य' ( पा० ३ । १ । ११४ ) इत्यादिना रुडागमसहितः क्यप्प्रत्ययो निपातितः । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । चिकेत 'कित ज्ञाने' लिट् । कतमां किं जातीयां 'वा बहूनां जातिपरिप्रश्ने डतमच्' ( पा० ५ । ३ । ९३) इति किम् शब्दात् डतमच् । डित्वाट्टिलोपः 'चितः' ( पा० ६ । १ । १६३ ) इत्यन्तोदात्तत्वम् ॥ ७ ॥

अष्टमीमृचमाह—

मं०—अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्। हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि॥८॥

प०—अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् । हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥ ८॥

भा०—पृथिव्याः सम्बन्धिनीरष्टौ ककुभः प्राच्याद्याश्चतस्रो दिशः आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशः व्यख्यत् । सविता प्रकाशितवान् । तथा योजना प्राणिनः स्वस्वभोगेन योजयितृन् धन्व अन्तरिक्षोपलक्षितान् त्री त्रिसंख्याकान् पृथिव्यादिलोकान् सप्त सिन्धून् गङ्गादि नदीः समुद्रान् वा सविता व्यख्यत् । हिरण्याक्षः हितरमणीयचक्षुर्युक्तः हिरण्मयाक्षो वा सविता देव आगात् इहागच्छतु । किं कुर्वन् दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि दधत् प्रयच्छत् ॥

अख्यत् ख्यातेर्लुङि 'अस्यतिवक्तीत्यादिना ( पा० ३ । १ । ५२ ) च्लेरङादेशः । त्रौ 'शेश्छन्दसि बहुलम्' ( पा० ६ । १ । ७० ) इति शेर्लोपः। धन्व 'रिवि रवि धवि गत्यर्थाः' 'इदितो नुम् धातोः' (पा० ७ । १ । ५८) इति नुम् । अस्मात् 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' ( उ० १ । १५४ ) इति कनिन् 'सुपां सुलुगिति' (पा० ७ । १ । ३९) विभक्तेर्लुक् । नलोपः । प्रत्ययस्य नित्वादाद्युदात्तत्वम् । योजना योजयन्ति प्राणिन उपभोगेनेति योजनानि नन्द्यादिलक्षणो ल्युः 'णेरनिटि'( पा० ६ । ४ । ५१ ) इति णेर्लोपः पूर्वत्रच्छेर्लोपः । हिरण्याक्षः हिरण्मयानि अक्षीणि यस्यासौ हिरण्याक्षः 'बहुव्रीहौ सक्थ्यक्ष्णोः' ( पा० ५ । ४ । ११३)इति समासान्तः षच्प्रत्ययः । अगात् एतेर्लुङि 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः । 'गातिस्था' ( पा० २ । ४ । ७७ ) इति सिचो लुक् । दधत् शतरि 'नाभ्यस्ताच्छतुः' (पा० ७ । १ । ७८) इति नुमागमप्रतिषेधः । 'श्नाभ्यस्तयोरातः' ( पा० ६ । ४ । ११२ ) इत्याकारलोपः । 'अभ्यस्तानामादिः' ( पा० ६ । १ । १८९ ) इत्याद्युदात्तत्वम् । दाशुषे 'दाश्वान् साह्वान्' ( पा० ६ । १ । १२ ) इत्यादिना क्वसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' (पा० ६ । ४ । १३१) परपूर्वत्वे 'शासिवसिघसीनां च' ( पा० ८ । ३ । ६० ) इति षत्वम् । वार्याणि 'वृङ् सम्भक्तौ' 'ऋहलोर्ण्यत्' ( पा० ३ । १ । १२४ ) इति ण्यत् 'ईडवन्देत्यादिना' (पा० ६ । १ । २१४ )आद्युदात्तत्वम्॥८॥

नवमीमृचमाह —

मं०—हिरण्यपाणिः सविता विचर्षणिरुभे द्यावा-
पृथिवी अन्तरीयते । अपामीवां बाधते
वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति॥९॥

प०—हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥ ९ ॥

भा०—हिरण्यपाणिः सुवर्णमयहस्तयुक्तः। यद्वा यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् विचर्षणिः विविधदर्शनयुक्तः विचर्षणिः । पश्यत्यर्थः । विचर्षणिः विश्वचर्षणिरिति तन्नामसु पाठात् सविता देवः उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति अमीवां रोगादिबाधां अपबाधते सम्यक् निराकरोति । तथा सूर्यं वेति गच्छति । यद्यपि सवितृसूर्य्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा तेजसा द्यामाकाशं अभ्यृणोति सर्वतो व्याप्नोति ॥ द्यावापृथिवी 'दिवसश्च पृथिव्याम्' ( पा० ६ । ३ । ३० ) इति च शब्दात् दिव्शब्दस्य द्यावादेशः । 'देवताद्वन्द्वे च' ( पा० ६ । २ । १४१ ) इत्युभयपदप्रकृतिस्वरत्वम् । 'नोत्तरपदेऽनुदात्तादौ' ( पा० ६ । २ । १४२ ) इति न निषेधः । 'अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वात् । ईयते 'ईङ् गतौ' 'तिङ्ङतिङः' (पा० ८ । २ । २८ ) इति निघातः । बाधते च वेति चेति समुच्चयार्थप्रतीतेश्चशब्दस्याप्रयोगात् 'चादिलोपे विभाषा' ( पा० ८ । १ । ६३ ) इति निघातप्रतिषेधः । वेति 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' अदादित्वाच्छपो लुक् । तिपः पित्वादनुदात्तत्वे धातुस्वरः । यद्यप्येषा द्वितीया तथापि तिङः परत्वान्निघाताभावः । ऋणोति 'ऋणु गतौ' तनादित्वादुः । तनादिषु करोतेरेव गुणो नान्येषामिति आपिशलिमतेन गुणाभावः ॥ ९ ॥

दशमीमृचमाह—

मं० हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ्। अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥

प०—हिरण्यऽहस्तः। असुरः। सुऽनीथः। सुऽमृळीकः। स्वऽवान्। यातु। अर्वाङ्। अपऽसेधन्। रक्षसः। यातुऽधानान्। अस्थात्। देवः। प्रतिऽदोषम्। गृणानः॥ १०॥

भा० हिरण्यहस्तः असुरः प्राणप्रदाता सुनीथः सुष्ठुनेता प्रशस्य इत्यर्थः। सुनीथः पाक इति प्रशस्यनामसु पाठात्। सुमृळीकः सुष्ठु सुखयिता। स्ववान् धनवान्। अर्वाङ् अभिमुखः। कर्मदेशे गच्छतु। किञ्च अयं देवः प्रतिदोषं प्रतिरात्रि गृणानः स्तूयमानः अस्थात् स्थितवान्। किं कुर्वन् रक्षसः बाधकत्वेन रक्षणनिमित्तभूतान्। रक्षोरक्षितव्यमस्मादिति (४।१८)यास्कः। यातुधानानसुरान् अपसेधन् निराकुर्वन्। हिरण्यहस्तादयोगताः। सुमृळीकः सुष्ठुमृडीकं सुखं यस्यासौ तथोक्तः 'नञ्सुभ्याम्' (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। स्ववान् स्वमस्यास्तीति स्ववान् 'मादुपधायाः' (पा० ८।२।९) इति वत्वम्। संहितायां नकारस्य 'दीर्घादटि समानपदे' (पा० ८।३।९) इति रुत्वम् 'आतोटि नित्यम्' (पा० ८।३।३) इति सानुनासिक आकारः। रोर्यत्वम्। यलोपश्च। अपसेधन् 'षिधु गत्यां' शपः पित्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वम्। रक्षसः 'रक्ष पालने' इत्यस्मादपादाने औणादिकः असि प्रत्ययः। यद्वा रक्ष्यन्तेऽनेनेति रक्षोदलम्। वरण-

असुन् तदेषामस्तीति रक्षस्विनः मत्वर्थप्रत्ययलोपश्छान्दसः प्रत्ययस्वरः । यातुधानान् 'यत निकारोपसंस्कारयोः' तस्मात् खन्तादौणादिको भावे उप्रत्ययः यातवो यातना एषु धीयन्त इति यातुधानाः । अधिकरणे ल्युट् 'लिति' ( पा० ६ । १ । १९३ ) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्यात् 'गातिस्थेति' ( पा० २ । ४ । ७१ ) सिचोलुक् । प्रतिदोषं दोषां दोषां प्रति वीप्सालक्षणे ययार्थे अव्ययीभावः । गृणानः 'गृ शब्दे' कर्मणि लटः शानच् । व्यत्ययेन श्ना 'प्वादीनां ह्रस्वः' (पा० ७ । ३ । ८० )इति ह्रस्वत्वम् । 'चितः' ( पा० ६ । १ । १६३ ) इत्यन्तोदात्तत्वम् ॥ १० ॥

एकादशीमृचमाह—

मं०—ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः
सुकृता अन्तरिक्षे । तेभि र्नो अद्य पथिभिः
सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ११ ॥

प०—ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृतः । अन्तरिक्षे । तेभिः । नः । अद्य पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥ ११ ॥

भा०—हे सवितः ते तव पन्था मार्गाः पूर्व्यासः पूर्वसिद्धाः अरेणवो धूलिरहिता अन्तरिक्षे सुकृताः सुष्ठु सम्पादिताः सुगेभिः सुष्ठुगन्तुं शक्यैः तेभिः पथिभिस्तैर्मार्गैः आगत्य अद्यास्मिन्दिने नोऽस्मान् रक्ष च पालनमपिकुरु । तथा हे देव नोस्माननुष्ठातॄन् अधि ब्रूहि च देवानामग्रे अधिकत्वेन कथय च ॥ पन्थाः 'सुपां सुलुगिति (पा० ७ । १ । ३९) जसः सुः ।

'पथिमथोः सर्वनामस्थाने' (पा० ६।१।१९९) इत्याद्युदात्तत्वम्। पूर्व्यासः पूर्वैः कृताः पूर्व्याः 'पूर्वैः कृतमिनियौ च' (पा० ४।४।१३३) इति यः। प्रत्ययस्वरः। असुगागमः। अरेणवः। 'नञ्सुभ्याम्' (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। सुकृताः कर्मणि क्तः 'गतिरनन्तरः' (पा० ६।२।४९) इति गतेः प्रकृतिस्वरत्वम्। सुगेभिः सुष्ठु गच्छन्त्येभिरिति सुगाः 'सुदुरोरधिकरणे' (वा० ३।२।४८) इति गमेर्डप्रत्ययः कृदुत्तरपदप्रकृतिस्वरत्वम्। रथ 'द्व्यचोतस्तिङः' (पा० ६।३।१३५) इति संहितायां दीर्घः॥ ११॥

इति प्रथमस्य तृतीये सप्तमो वर्गः॥ ७॥

---

प्रथममण्डले द्विचत्वारिंशं (संग्रहे सप्तमं) सूक्तम्॥

संपूषन्निति दशर्चं सप्तमं सूक्तं काण्वं गायत्रं पूषदेवताकम्। सम्पूषन्दश पौष्णमित्यनुक्रान्तम्। स्मार्ते महान्तमध्वानमेष्यन्निदं सूक्तं जपेत्। 'सम्पूषन्नध्वन इति महान्तमध्वानमेष्यन् प्रतिभयं वा' (आश्व० ३।७।१०) इति सूचितत्वात्। तत्र जपेदित्यनुवर्तते॥

तत्र प्रथमामृचमाह—

मं० संपूषन्नध्वनस्तिर व्यंहोविमुचोनपात्।
सक्ष्वा देव प्रणस्पुरः॥ १॥

प०—सम्। पूषन्। अध्वनः। तिर। वि अंहः। विऽमुचः। नपात्। सक्ष्व। देव। प्र। नः। पुरः॥ १॥

भा० हे पूषन् जगत्पोषक पृथिव्यभिमानि देव अध्वनो मार्गात् संतिर अस्मानभीष्टस्थानं सम्यक् प्रापय। अंहो विघ्नहेतुं पाप्मानं

विंतिर विनाशय। पूषा विशिष्यते विमुचोनपात् जलविमोचनहेतोर्मेघस्य पुत्र नपादिति पुत्रनाम 'नपात्प्रजा' इति तन्नामसु पाठात्। श्रुत्यन्तरे 'अद्भ्यः पृथिवी' इति जलाद्भूम्युत्पत्तिः श्रूयते। तथान्यत्राप्युदकसारत्वं पृथिव्याः श्रूयते 'तद्यदपां सार आसीत्तत्समहन्यत सा पृथिव्यभवद्' इति॥ मेघस्य जलधारित्वादुदकपुत्र एव मेघपुत्रो भवति। नच पृथिव्या मेघपुत्रत्वे पूष्णः किमायातमिति वाच्यम्, पृथिव्या एव पूषत्वात्। तथा च श्रुत्यन्तरे कस्य चिन्मन्त्रस्य ब्राह्मणमेवमाम्नायते'पूषाध्वनः पात्वित्याहेयं वै पूषा' इति। तन्निर्वचनं चान्यत्रैवमाम्नायते 'इयं वै पूषेयंहीदं सर्वं पुष्यति यदिदं किं च' ( शत० १४। ४। २। २५ ) इति हे देव पूषन् नः पुरः अस्माकं पुरतः प्रसच्च प्रसक्तो भव पुरतो गच्छेत्यर्थः॥ विमुचोनपात् उदकं विमुंचतीति विमुङ् मेघः 'क्विप्च' ( पा० ३। २। ७६ ) इति क्विप्। न पातयति कुलमिति नपात् पुत्रः नञ् पूर्वात् पातयतेः क्विप् 'नभ्राण्नपादित्यादिना' ( पा० ६। ३। ७५ ) नञः प्रकृतिभावः। 'सुबामन्त्रिते' ( पा० २। १। २ ) इति पराङ्वद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वम्। सच्च 'षच सेवने' अनुदात्तेत्त्वादात्मनेपदम् लोटि 'बहुलं छन्दसीति ( पा० २। ४। ७३ ) शपो लुक्। 'तास्यनुदात्ते'दिति ( पा० ६। १। १८६ ) लसार्वधातुकानुदात्तत्वे धातुस्वरः। प्रणः 'उपसर्गाद्बहुलमिति' ( पा० ८। ४। २८ ) नसोणत्वम्। पुरः उक्तम्॥ १॥

द्वितीयामृचमाह—

मं०—यो नः पूषन्नघो वृको दुःशेव आ दिदेशति।

अप स्म तं पथो जहि॥ २॥

प०—यः। नः। पूषन्। अघः। वृकः। दुःऽशेवः। आऽदि-

दिदेशति। अप। स्म। तम्। पथः। जहि॥ २॥

भा०—हे पूषन् यः प्रतिपन्थी नोऽस्मानादिदेशति 'अनेन मार्गेण गन्तव्यं' इत्येवमाज्ञापयति। कीदृशः। अघः आहन्ता। वृकः अस्मदीयस्य धनस्यादाता अपहर्तेत्यर्थः। दुःशेवः सेवितुं दुःशकः दुष्टसुखो वा। तं तादृशं प्रतिपन्थिनं पथो मार्गात् अपजहि स्म अवश्यमपाकुरु॥ वृकः 'वृक वृक आदाने' वर्कत इति वृकः। इगुपधलक्षणः कः। वृषादित्वादाद्युदात्तत्वम्। दुःशेवः दुष्टं शेवं यस्यासौ दुःशेवः 'परादिश्छन्दसि बहुलम्' (पा० ६।२।१९९) इति उत्तरपदाद्युदात्तत्वम्। यद्वा दुःखेन सेव्यत इति दुःशेवः वर्णव्यत्ययेन सकारस्य शकारः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति' (वा० ३।३।१२६) खल्। लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम्। आदिदेशति 'दिश अतिसर्जने' लेट्यडागमः। 'बहुलं छन्दसि' (पा० २।४।७६) इति शपः श्लुः। 'बहुलं छन्दसीति' (वा० ७।३।८७) वचनात् 'नाभ्यस्तस्याचि' (पा० ७।३।८७) इति लघूपधगुणप्रतिषेधाभावः। पथः उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्॥ २॥

तृतीयामृचमाह—

मं०—अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम्।
दूरमधि स्रुतेरज॥ ३॥

प०—अप। त्यम्। परिऽपन्थिनम्। मुषीवाणम्। हुरःऽचितम्। दूरम्। अधि। स्रुतेः। अज॥ ३॥

त्वं। तादृशं पूर्वोक्तगुणयुक्तम् स्रुतेर्मार्गादधिदूरमत्यन्तदूरदेशं प्रति अपाज अपगमय। कीदृशं, परिपन्थिनम् मार्गप्रतिबन्धकम्। मुषीवाणं तस्कररूपम्। मुषीवेति तस्करस्य नाम। 'मुषीवान् मलिम्लुच इति तन्नामसु पाठात्। ह्वरश्चितं कौटिल्यानां सञ्चेतारम्। परिपन्थिनं 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि (पा॰ ५। २। ८९) इति शत्रावभिधेये इनिप्रत्ययान्तो निपातितः। मुषीवाण 'मुष स्तेये' मोषणं मुषिः। औणादिको भावे किप्रत्ययः। मुषिं वनति सम्भजत इति मुषीवा 'वन षण सम्भक्तौ' 'अन्येभ्योपि दृश्यन्ते' (पा॰ ३। २। ७५) इति विच्प्रत्ययः। सर्वनामस्थाने चासम्बुद्धौ' (पा॰ ६। ४। ८) इति दीर्घः। 'अन्येषामपि दृश्यते' (पा॰ ६। ३। १३७) इति पूर्वपदस्य दीर्घत्वम्। ह्वरश्चितं 'ह्वृ कौटिल्ये' सम्पदादिलक्षणो भावे क्विप् 'राल्लोपः' (पा॰ ६। ४। २१) इति छकारलोपः। ह्वरश्चिनोतीति ह्वरश्चित्। चिनोतेः क्विपि तुगागमः 'तत्पुरुषे कृति बहुलम्' (पा॰ ६। ३। १४) इत्यलुक् कृदुत्तरपदप्रकृतिस्वरत्वम्। स्रुतेः 'स्रु गतौ' 'क्तिच्क्तौ च संज्ञायाम्' (पा॰ ३। ३। १७४) इति क्तिच्। 'चितः' (पा॰ ६। १। १६३) इत्यन्तोदात्तत्वम्। अज 'अज गतिक्षेपणयोः ॥ ३ ॥

चतुर्थीमृचमाह—

मं॰—त्वं तस्य द्वयाविनोघशंसस्य कस्य चित्।

पदाभि तिष्ठ तपुषिम् ॥ ४ ॥

प॰—त्वम्। तस्य। द्वयाविनः। अघऽशंसस्य। कस्य। चित्। पदा। अभि। तिष्ठ। तपुषिम् ॥ ४ ॥

भा०—हे पूषन् त्वं तस्य चौरस्य तपुषिम् परसन्तापकं देहं पदाभितिष्ठ। भवदीयेन पादेनाक्रम्य तिष्ठ। कीदृशस्य द्वयाविनः प्रत्यक्षापहारः परोक्षापहारश्चेति यद्द्वयं तद्युक्तस्य। अघशंसस्य अस्मास्वघमनिष्टं शंसतः। अघशंस इति तस्करनाम। 'मलिम्लुचः अघशंसः वृकः' इति तन्नामसु पाठात्॥ कस्य चित् अनिर्दिष्टविशेषस्य कस्यापि द्वयाविनः द्वयमस्यास्तीति द्वयावी 'बहुलं छन्दसि' (पा० ५।२।१२२) इतिमत्वर्थीयो विनिः 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति दीर्घत्वम्। अघशंसस्य अघे पापे शंसो मनस्यभिलाषो यस्य सोयमघशंसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। तपुषिम् तापयत्यनेनान्यमिति तपुषिः औणादिक उषिन् प्रत्ययः। बहुलवचनादिकारस्य नेत्संज्ञा। नित्वादाद्युदात्तत्वम्॥ ४॥

पञ्चमीमृचमाह—

मं०—आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे।
येन पितॄनचोदयः॥ ५॥ २४॥

प०—आ। तत्। ते। दस्र। मन्तुऽमः। पूषन्। अवः। वृणीमहे। येन। पितॄन्। अचोदयः॥ ५॥ २४॥

भा०—हे मन्तुमः ज्ञानवन् दस्र दर्शनीय यद्वा वैर्युपक्षयकारिन् पूषन् ते त्वदीयं तदवः तादृशं रक्षणं आवृणीमहे सर्वतः प्रार्थयामहे। येन रक्षणेन पितॄनङ्गिरःप्रभृतीन् पितृदेहानचोदयः प्रेरितवानसि। तद्रक्षणमितिपूर्वेणान्वयः॥

दस्र 'दसि दंसनदर्शनयोः' 'स्फायितञ्च्यादिना' (उ० २। १३) रक्प्रत्ययः आगमानुशासनस्यानित्यत्वान्नुमभावः। यद्वा 'दसु उपक्षये

इत्यस्मादन्तर्भावितण्यर्थात्पूर्ववद्रक् । मन्तुमः 'मन ज्ञाने' 'कमिमनिजनीत्यादिना' ( उ० १ । ७३ ) भावे तुप्रत्ययः मन्तुर्ज्ञानमस्यास्तीति मन्तुमान् सम्बुद्धौ 'मतुवसो रुः' (पा०८ । ३ । १) इति रुत्वम् । अचोदयः । 'चुद सञ्चोदने' चौरादिकः ॥ ५ ॥

इतिप्रथमस्य तृतीये चतुर्विंशो वर्गः ॥ २४ ॥

षष्ठीमृचमाह—

मं०—अधा नो विश्वसौभग हिरण्यवाशीमत्तम ।
धनानि सुषणा कृधि ॥ ६ ॥

प०—अध । नः । विश्वऽसौभग । हिरण्यवाशीमत्ऽतम ।
धनानि । सुऽसना । कृधि ॥ ६ ॥

भा०—हे विश्वसौभग कृत्स्नधनयुक्त । यद्वा कृत्स्नसौभाग्ययुक्त हिरण्यवाशीमत्तम अतिशयेन सुवर्णमयायुधवन् पूषन् । अध पूर्वोक्तास्मदीय प्रार्थनानन्तरं नोऽस्माकं धनानि सुवर्णमणिमुक्तादीनि सुषणा सुष्ठुदान युक्तानि कृधि कुरु ॥ अध अथशब्दे धत्वं छान्दसं 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति संहितायां दीर्घत्वम् । विश्वसौभग 'सुभगान्मन्त्रे' (गण० ५ । १ । १२८) इत्युद्गात्रादिषु पाठात् भावे अञ् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति ( पा० ७ । ३ । १९ ) उत्तरपदवृद्धौ प्राप्तायां सत्यां सर्वविधीनां छन्दसि विकल्पितत्वात् । उत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् । विश्वानि सौभगानि यस्यासौ विश्वसौभगः । आमन्त्रितनिघातः । हिरण्यवाशीमत्तम हिरण्यमयी वाशी तदेषामस्तीति हिरण्य वाशीमन्तः अतिशयेन हिरण्यवाशीमान् हिरण्यवाशीमत्तमः आमन्त्रितनिघातः । सुषणा 'वन षण सम्भक्तौ' सुखेन सम्भज्यन्त इति सुषणानि 'ईषद्दुःसुषु-

ति' ( पा० ३ । ३ । १२६ ) खल् 'शेश्छन्दसीति' ( पा० ६ । १ । ७० ) शेर्लोपः॥

'लिति' (पा० ६ । १ । ९३ ) । इति प्रत्ययात्पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । कृधि 'डुकृञ् करणे' 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा० ६ । ४ । १०२ ) इति हेर्धिरादेशः 'बहुलं छन्दसि' ( पा० २ । ४ । ७३ ) इति विकरणस्य लुक् ॥ ६ ॥

सप्तमीमृचमाह—

मं०—अति नः सश्चतो नय सुगा नः सुपथा कृणु । पूषन्निह क्रतुं विदः ॥ ७ ॥

प०—अति । नः । सश्चतः । नय । सुऽगा । नः । सुऽपथा । कृणु । पूषन् । इह । क्रतुम् । विदः ॥ ७ ॥

भा०—सश्चतः अस्मद्बाधनाय प्राप्नुवतः शत्रूनोऽति अस्मानतिक्रम्य नय अन्यत्र प्रापय नोऽस्मान् सुगा सुष्ठुगन्तुं शक्येन सुपथा शोभनमार्गेण कृणु गन्तॄन् कुरु । हे पूषन् इहाध्वनि क्रतुं प्रज्ञानं अस्मद्रक्षणरूपं विदो जानीहि ॥ सश्चतः 'ग्लुचुषस्ज गतौ'इत्यत्र'सश्चिमप्येके' पठन्तीति धातुवृत्तौ उक्तम् । अस्माल्लटः शतृ 'बहुलं छन्दसीति (पा०२। ४। ७३) शपो लुक् । प्रत्ययस्वरेण शतुरुदात्तत्वम् । 'शतुरनुमः' (पा० ६ । १ । १७३ ) इति विभक्त्युदात्ताभावश्छान्दसः । सुगा सुष्ठुगच्छन्त्यत्रेति सुगः 'सुदुरोरधिकरणे' ( वा० ३ । २ । ४८ ) इति गमेर्डप्रत्ययः । 'सुपांसुलुगिति (पा० ७ । १ । ३९) तृतीयाया आकारः । सुपथा शोभनेन पथा 'न पूजनात्' ( पा० ५ । ४ । ६९ ) इति समासान्तप्रतिषेधः । 'परादिश्छन्दसि बहुलम्' (पा० ६ । २ । १९९ ) । इत्युत्तरपदाद्युदात्तत्वम् । 'क्त्वादयश्च'

( पा० ६ । २ । ११८ ) इत्युत्तरपदाद्युदात्तत्वं न भवति अबहुव्रीहित्वात्। तत्र हि बहुव्रीहावित्यनुवर्तते। क्रणु 'क्रवि हिंसाकरणयोः' 'धिन्विकृण्व्योरच' ( पा० ३ । १ । ८० ) इत्युप्रत्ययः उतश्च 'प्रत्ययादिति' ( पा० ६ । ४ । १०६ ) हेर्लुक्। विदः 'विद ज्ञाने' लेट्यडागमः। 'इतश्च लोपः' ( पा० ३ । ४ । ९७ ) इतोकारलोपः ॥ ७ ॥

अष्टमीमृचमाह--

मं०—अभि सूयवसं नय न नवज्वारो अध्वने।

पूषन्निह क्रतुं विदः ॥ ८ ॥

प०—अभि। सुऽयवसम्। नय। न। नवऽज्वारः। अध्वने।

पूषन्। इह। क्रतुम्। विदः ॥ ८ ॥

भा०—हे पूषन् सुयवसं शोभनतृणोपलक्षितसर्वौषधियुक्तं देशमभिनय अस्मानभितः प्रापय। अध्वने मार्गाय नवज्वारो नूतनः सन्तापो न भवत्विति शेषः। मार्गे गच्छतामस्माकं इदानींतनः क्लेशः कोपि माभूदित्यर्थः। गतार्थमन्यत्॥ सूयवसं शोभनं यवसं यस्मिन् देशे स सूयवसो देशः। 'निपातस्य च' ( पा० ६ । ३ । १३६ ) इति पूर्वपदस्य दीर्घत्वम्। 'परादिश्छन्दसि बहुलम्' ( पा० ६ । २ । १९९ ) इत्युत्तरपदाद्युदात्तत्वम्। क्रत्वादिर्वा द्रष्टव्यः। नवज्वारः 'ज्वर रोगे' भावे घञ् नवश्चासौ ज्वारो नवज्वारः। 'थाथादिनोत्तरपदान्तोदात्तत्वम्' ( पा० ६ । २ । १४४ ) ॥ ८ ॥

नवमीमृचमाह—

मं०—शग्धि पूर्धि प्रयंसि च शिशीहि प्रास्यु-

दरम्। पूषन्निह क्रतुं विदः ॥९॥

प०—शग्धि। पूर्धि। प्र। यंसि। च। शिशीहि। प्रासि। उदरम्। पूषन्। इह। क्रतुम्। विदः॥ ९॥

भा०—हे पूषन् शग्धि अस्माननुगृहीतुं शक्तो भव। पूर्धि अस्मद्गृहं धनेन पूरय। किञ्च प्रयंसि अन्यदप्यपेक्षितं वसु प्रयच्छ। शिशीहि अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु तेजस्विनः कुर्वित्यर्थः। उदरमस्मदीयं प्रासि मृष्टान्नेन सोमरसेन वा पूरय॥ अन्यत्पूर्ववत्॥ शग्धि 'शक्लृ शक्तौ' लोटो हिः 'बहुलं छन्दसीति' (पा० २। ४। ७३) विकरणस्य लुक् 'हुझल्भ्यो हेर्धिः' (पा० ६। ४। १०१) इति हेर्धिरादेशः। हेरपित्वात् प्रत्ययस्वरेणोदात्तत्वम्। पूर्धि 'पॄ पालनपूरणयोः' 'श्रुशृणुपृकृवृभ्यश्छन्दसि (पा०६। ४। १०२) इति हेर्धिरादेशः पूर्ववद्विकरणस्य लुक्। 'उदोष्ठ्यपूर्वस्येति' (पा० ७। १। १०२) उत्वम्। 'हलि च' (पा०८। २। ७७) इति दीर्घः। तिङः परत्वान्निघाताभावः। यंसि 'यम उपरमे' लोडर्थे लटि पूर्ववत् विकरणस्य लुक्। निघातः। शिशीहि 'शो तनूकरणे' लोटि 'बहुलं छन्दसि' (पा० ७। ४। ७८) इत्यभ्यासस्येत्वम 'ई हल्यघोः' (पा० ६। ४। ११३) इतीत्वम्। प्रत्ययस्वरः। प्रासि 'प्रा पूरणे' अदादित्वाच्छपो लुक्। सिपः पित्वादनुदात्तत्वे धातुस्वरः॥९॥

दशमीमृचमाह—

मं०—न पूषणं मेथामसि सूक्तैरभि गृणीमसि।
वसूनि दस्ममीमहे ॥१०॥२५॥

प०—न। पूषणम्। मेथामसि। सुऽउक्तैः। अभि। गृणी-

मसि । वसूनि । दस्मम् । ईमहे ॥ १० ॥ २५ ॥

भा०—पूषणं देवं न मेथामसि वयं न तु निन्दामः । किन्तु सूक्तैर्वेदगतैरभि गृणीमसि सर्वत्र स्तुमः । दस्मं दर्शनीयं पूषणं प्रति वसूनि धनानि ईमहे याचामहे ॥ मेथामसि 'मेथृ मेधाहिंसनयोः' लटि 'इदन्तो मसिः' ( पा० ७ । १ । ४६ ) इति मस इकारागमः । सूक्तैः सुष्ठुस्तुवते देवताः प्रकाशयन्तीति सूक्तानि 'क्तिच्क्तौच संज्ञायामिति' (पा० ३ । ३ । १७४) कर्तरि क्तः 'वचिस्वपीत्यादिना' ( पा० ६ । १ । १५ ) सम्प्रसारणम् । थाथादिस्वरः । यद्वा कर्मणि निष्ठा 'सूपमानात् क्तः' ( पा० ६ । २ । १४५) इत्युत्तरपदान्तोदात्तत्वम् । गृणीमसि 'गॄ शब्दे' 'प्वादीनां ह्रस्वः' ( पा० ७ । ३ । ८० ) इति ह्रस्वत्वम् । इदन्तोमसिः । दस्मं 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' ( उ० १ । १४४ ) इति मक्प्रत्ययः ॥ १० ॥

इति प्रथमस्य तृतीये पञ्चविंशो वर्गः २५ ॥

इति प्रथममण्डले द्वाचत्वारिंशं सूक्तम् ॥

---

प्रथममण्डले पञ्चाशत्तमं ( संग्रहेऽष्टमं ) सूक्तम् ॥

उदु त्यमिति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यम् । आदौ नवगायत्र्यः शिष्टास्ततोनुष्टुभ इत्युक्तम् । तथाचानुक्रान्तम्—'उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्य'इति । आश्विनशस्त्रे सौर्ये क्रतौ उदु त्यमित्यादयो नवर्चः शंसनीयाः । संस्थितेष्वाश्विनायेति खण्डे सूचितम् ( आश्व० ६ । ५ ) सूर्योनोदिवः । उदुत्यं जातवेदस मितिनवेति ॥

तत्र प्रथमामृचमाह—

मं०—उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्यम् ॥ १ ॥

प०—उत्। ॐ इति। त्यम्। जातऽवेदसम्। देवम्। वहन्ति। केतवः। दृशे। विश्वाय। सूर्यम्॥ १॥

भा०—केतवः प्रज्ञापकाः सूर्याश्वाः। यद्वा सूर्यरश्मयः। सूर्यं सर्वस्य प्रेरकमादित्यं उदु वहन्ति ऊर्ध्वं वहन्ति। उ इति पादपूरणः। उक्तञ्च-'मिताक्षरेष्वनर्थकाः कमीमिदु' (नि० १। ९) इति। किमर्थं विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुम्। यथा सर्वे जनाः सूर्यं पश्यन्ति। तथोर्ध्वं वहन्तीत्यर्थः। कीदृशं सूर्यं त्यं प्रसिद्धम्। जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा। देवं द्योतमानम्। अत्र निरुक्तम् (१२। १५) 'उद्वहन्ति तं जातवेदसं देवमश्वः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्यमिति॥ जातवेदसं जातानि वेत्तीति जातवेदाः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (उ० ४। २२६) इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च। 'दृशे विख्ये च' (पा० ३।४।११) इति तुमर्थे निपातितः। सूर्यं 'राजसूयसूर्येत्यादिना (पा० ३। १। ११४) 'षू प्रेरणे' इत्यस्मात् क्यपि रुडागमसहितो निपातितः। अतः प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम्॥ १॥

द्वितीयामृचमाह—

मं०—अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः।
सूराय विश्वचक्षसे॥ २॥

प०—अप। त्ये। तायवः। यथा। नक्षत्रा। यन्ति। अक्तुऽभिः। सूराय। विश्वऽचक्षसे॥ २॥

भा०—त्ये तायवो यथा प्रसिद्धास्तस्करा इव नक्षत्रा नक्षत्राणि देवगृहरूपाणि 'देवगृहा वै नक्षत्राणि' ( तै० ब्रा० १ । ५ । २ । ६ ) इति श्रुत्यन्तरात् । यद्वा इह लोके कर्मानुष्ठाय ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते । तथा च श्रूयते (तै० ब्रा० १।५ । २।५) यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्'इति । यद्वा तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' ( तै० सं० ५ । ४ । १ । ३) इत्याम्नानात् । यास्कस्त्वाह (निरु० ३ । २०) 'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्'इति। तथाविधानि नक्षत्राणि अक्तुभिः रात्रिभिः सह अप यन्ति अप गच्छन्ति । विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य सूराय सूर्यस्य आगमनं दृष्टेति शेषः । तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्त इत्यर्थः तायुरिति स्तेननाम । तायुस्तस्कर इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम । शर्वरी अक्तुरिति तत्र पाठात् ॥

यथा 'यथेति पादान्ते' ( फि० ४ । १३ ) इति सर्वानुदात्तत्वम् । नक्षत्र 'नक्ष गतौ' 'अमिनक्षियजिवध्यिपतिभ्योत्रन्' ( उ० ३ । १०५ ) इत्यत्रन् प्रत्ययः नित्वादाद्युदात्तत्वम् । 'नभ्राण्नपादित्यत्र (पा० ६ । ३ ७५ ) वृत्तौ त्वेवमुक्तम् 'न क्षरति न क्षीयत इति वा नक्षत्रम्। क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यते' इति । 'शेश्छन्दसि बहुल'मिति ( पा० ६ । १ । ७०) शेर्लोपः । यन्ति 'इण् गतौ' 'इणो यण्'(पा०६ । ४ । ८१)इति यणादेशः । सूराय विश्वचक्षसे विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः 'चक्षेर्बहुलं शिच्च' (उ० ४ । २३२ ) इत्यसुन्प्रत्ययः । शित्त्वेन सार्वधातुकत्वात् ख्याञादेशाभावः । उभयत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्या' ( महाभा० २ । ३ । ६२ ) इति चतुर्थी ॥ २ ॥

तृतीयामृचमाह—

मं०—अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।

भ्राजन्तो अग्नयो यथा ॥ ३ ॥

प०—अदृश्रम्। अस्य। केतवः। वि। रश्मयः। जनान्। अनु। भ्राजन्तः। अग्नयः। यथा ॥ ३ ॥

भा०—अस्य सूर्यस्य केतवः प्रज्ञापकाः रश्मयो दीप्तयः जनाननु व्यदृश्रं जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते सर्वं जगत्प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—भ्राजन्तो दीप्यमानाः अग्नयो यथा अग्नय इव। अदृश्रं 'दृशिर् प्रेक्षणे' वर्तमाने लुङ् 'इरितो वा' (पा० ३। १। ५७) इति च्लेरङा-देशः। रुडित्यनुवृत्तौ 'बहुलं छन्दसि' (पा० ७। १। ८) इति रुडागमः अत एव बहुलवचनात् 'ऋदृशोऽङि गुणः' (पा० ७। ४। १६) इति गुणाभाव इत्युक्तम्। तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचनस्य उत्त-मपुरुषैकवचनादेशः। प्रथमपुरुष एव शाखान्तरे श्रूयते (अथर्व० १३ २। १८) 'अदृश्रन्नस्य केतवः' इति। जनानित्यस्य नकारस्य संहितायां रुत्वयत्वादिपूर्ववत्। भ्राजन्तः शपः पित्वादनुदात्तत्वम् शतुश्च लसार्व-धातुकस्वरेण धातुस्वर एव शिष्यते ॥ ३ ॥

चातुर्मास्येषु शुनासीर्ये पर्वणि अस्ति सौर्य एककपालः, तस्य तरणि-रित्येषानुवाक्या। तथा च (आश्व० २। २०) सूत्रितम् 'तरणिर्विश्वदर्श-तश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्या' इति। तथा—अति मूर्तिनाम्न्येकाहे कृष्णपक्षे सौरीष्टिः कर्तव्या तस्यामप्येषानुवाक्या। अति मूर्त्तिनेति खण्डे सूत्रितम् (आश्व० ९। ८) नवो नवो भवति जायमान-स्तरणिर्विश्वदर्शत' इति ॥

तामेतां सूक्ते चतुर्थीमृचमाह—

मं०—तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।

विश्वमाभासि रोचनम् ॥ ४ ॥

प०—तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य ।

विश्वम् । आ । भासि । रोचनम् ॥ ४॥

भा०—हे सूर्य त्वं तरणिः तरिता अन्येन गन्तुमशक्यस्य महतोध्वनो गन्तासि तथा च स्मर्यते 'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोस्तु ते' ॥ १ ॥ इति । यद्वा उपासकानां रोगात्तारयितासि 'आरोग्यं भास्करादिच्छेदिति' स्मरणात् । तथा विश्वदर्शतः विश्वैः सर्वैः प्राणिभिर्दर्शनीयः आदित्यदर्शनस्य चाण्डालादिदर्शनजनितपापनिर्हरणहेतुत्वात् । तथा चापस्तम्बः 'दर्शने ज्योतिषां दर्शन'मिति । यद्वा विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन सः तथोक्तः । तथा ज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा चन्द्रादीनां रात्रौ प्रकाशयिता । रात्रौ हि अम्मयेषु चन्द्रादिबिंबेषु । सूर्यकिरणाः प्रतिफलिताः सन्तो ऽन्धकारं निवारयन्ति । यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः । यस्मादेवं तस्मात् विश्वं व्याप्तं रोचनं रोचमानमन्तरिक्षं आ समन्ताद्भासि प्रकाशयसि । यद्वा हे सूर्य अन्तर्यामितया सर्वस्य प्रेरक परमात्मन् । तरणिः संसाराब्धेस्तारकोसि । यस्मात्त्वं विश्वदर्शतः विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः । अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते । ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता तथा चाम्नायते "चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायतेति" ( ऋ० सं० ८ । ४ । १९) ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं रोचमानं दीप्यमानं यथा भवति तथा भासि

प्रकाशयसि। चैतन्यस्फुरणे हि सर्वं जगद्दृश्यते। तथा चाम्नायते (क० उप० ५। १५) "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति"। तरणिः 'तॄ प्लवनसन्तरणयोः' अस्मादन्तर्भावितण्यर्थात् 'अर्तिसृधृधम्यश्यवितॄभ्योऽनिः' (उ० २। १०२) इत्यनिप्रत्ययः। प्रत्ययाद्युदात्तत्वम्। ज्योतिः करोतीति ज्योतिष्कृत् 'क्विप् च' (पा० ३। २। ७६) इति क्विप्। 'नित्यं समासेऽनुत्तरपदस्थस्येति' (पा० ८। ३। ४५) विसर्जनीयस्य षत्वं। भासि 'भा दीप्तौ' अन्तर्भावितण्यर्थाल्लटि अदादित्वाच्छपो लुक् ४॥

पञ्चमीमृचमाह—

मं०—प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्। प्रत्यङ् विश्वं स्वर्दृशे ॥ ५ ॥ ७॥

प०—प्रत्यङ्। देवानाम्। विशः। प्रत्यङ्। उत्। एषि। मानुषान्। प्रत्यङ्। विश्वम्। स्वः। दृशे ॥ ५ ॥ ७ ॥

भा—हे सूर्य त्वं देवानां विशः मरुन्नामकान् देवान् 'मरुतो वै देवानां विशः' (तै० सं० २। २। ५। ७) इति श्रुत्यन्तरात्। तान्मरुत्संज्ञकान् देवान् प्रत्यङ्ङुदेषि तान् प्रतिगच्छन्नुदयं प्राप्नोषि। तेषामभिमुखं यथा भवति तथेत्यर्थः। तथा मानुषान् मनुष्यान् प्रत्यङ्ङुदेषि तेपि यथा अस्मदभिमुख एव सूर्य उदेतीति मन्यंते। तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः। एतदुक्तं भवति लोकत्रयवर्तिनो जनाः सर्वेपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति तथा चाम्नायते (तै०

सं० ६ । ५ । ४ ) "तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति" ॥ प्रत्यङ् प्रत्यञ्चतीति प्रत्यङ् 'अञ्चु गतिपूजनयोः' 'ऋत्विगित्यादिना' ( पा० ३ । २ । ५९ ) क्विन् । 'अनिदितामिति' ( पा० ६ । ४ । २४ ) नलोपः । 'उगिदचामिति' ( पा० ७ । १ । ७१ ) नुम् । हल्ङ्यादिसंयोगान्त लोपौ । संयोगान्तलोपस्यासिद्धत्वात् उपधादीर्घनलोपयोरभावः । 'क्विन् प्रत्ययस्य कुः' ( पा० ८ । २ । ६२ ) इति कुत्वम् । 'अनिगन्तोऽञ्चताविति' ( पा० ६ । २ । ५२ ) अनिगन्त इति पर्युदासात्पूर्वपदप्रकृतिस्वराभावे क्रदुत्तरपदप्रकृतिस्वरत्वम् । एषि 'इण् गतौ' सिपि अदादित्वाच्छपो लुक् 'आदेशप्रत्यययोः' ( पा० ८ । ३ । ५९ ) इति षत्वम् । स्वः सुपूर्वादर्तेर्विच् गुणे यणादेशः । 'न्यङ् स्वरौ स्वरितौ च' ( फि० ४ । ६ ) इति स्वरितत्वम् । दृशे 'दृशिर् प्रेक्षणे' इत्यस्मात् 'दृशे विख्येच' ( पा० ३ । ४ । ११ ) इति तुमर्थे निपातितः ॥ ५ ॥

इति प्रथमस्य चतुर्थे सप्तमो वर्गः ॥

षष्ठीमृचमाह—

मं०—येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।

त्वं वरुण पश्यसि ॥ ६ ॥

प०—येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् ।

अनु । त्वम् । वरुण । पश्यसि ॥ ६ ॥

भा०—हे पावक सर्वस्य शोधक वरुण अनिष्टनिवारक सूर्य त्वं जनान् जातान् प्राणिनः भुरण्यन्तं धारयन्तं पोषयन्तं वा इमं लोकं येन चक्षसा प्रकाशेनानुपश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति

शेषः। यद्वा उत्तरस्यामृचि सम्बन्धः तेन चक्षसा व्येषीति। तथा च यास्केनोक्तम् (निरु० १२। २२) तत्ते वयं स्तुम इति वाक्यशेषोपि वोत्तरस्यामन्वयस्तेन व्येषीति। भुरण्यन्तम्। 'भुरण धारणपोषणयोः' कण्ड्वादित्वाद्यक्। ततः शतरि कर्त्तरि शप्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। वरुण 'वृञ् वरणे' अस्मादन्तर्भावितण्यर्थात् 'कृवृदारिभ्य उनन्' (उ० ३। ५३) इत्युनन् प्रत्ययः। अत्र वरुणशब्देन आदित्य एवोच्यते तथा चान्यत्राम्नातम् 'तस्यैव मित्रश्च वरुणश्चा जायेतामिति (तै० ब्रा० १। १। ९।) मित्रश्च वरुणश्च धाता चार्यमा चेति (तै० आ० १। १३। ३)॥ ६॥

सप्तमीमृचमाह—

मं०—वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः।
पश्यञ्जन्मानि सूर्य॥ ७॥

प०—वि। द्याम्। एषि। रजः। पृथु। अहा। मिमानः। अक्तुऽभिः। पश्यन्। जन्मानि। सूर्य॥ ७॥

भा०—हे सूर्य त्वं पृथु विस्तीर्णं रजो लोकं। लोका रजांस्युच्यन्त इति (निरु० ४। १९) यास्कः॥ कं लोकम्, द्यां अन्तरिक्षलोकं व्येषि विशेषेण गच्छसि किं कुर्वन्, अहा अहानि अक्तुभी रात्रिभिः सह मिमानः उत्पादयन्। आदित्यगत्यधीनत्वादहोरात्रविभागस्य। तथा जन्मानि जननवन्ति भूतजातानि पश्यन् प्रकाशयन्॥ रजस्पृथ्वित्यत्र 'छन्दसि वाप्राम्रेडितयोः' (पा० ८। ३। ४९) इति विसर्जनीयस्य सत्वम्। अहा 'शेश्छन्दसि बहुलमिति' (पा० ६। १। ७०) शेर्लोपः। मिमानः 'माङ्माने' जौहोत्यादिकः। शानचि श्लौ द्विर्भावे 'भृञामित्'

( पा० ७ । ४ । ७६ ) इत्यभ्यासस्येत्वम् । 'श्नाभ्यस्तयोरातः' ( पा० ६ । ४ । ११२ ) इत्याकारलोपः । 'अभ्यस्तानामादिः' ( पा० ६ । १ । १८९) इत्यभ्यस्तस्याद्युदात्तत्वम् । जन्मानि 'जनी प्रादुर्भावे' 'अन्येभ्योऽपि दृश्यन्ते' ( पा० ३ । २ । ७५ ) इति मनिन् । नित्वादाद्युदात्तत्वम् ॥७॥

अष्टमीमृचमाह—

मं०—सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षण ॥ ८ ॥

प०—सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य ।
शोचिःऽकेशम् । विऽचक्षण ॥ ८ ॥

भा०—हे सूर्य देव द्योतमान विचक्षण सर्वस्य प्रकाशयितः सप्त सप्तसंख्याकाः हरितोऽश्वाः रसहरणशीला रश्मयो वा त्वा त्वां वहन्ति प्रापयन्ति । कीदृशं, रथेऽवस्थितमिति शेषः । तथा शोचिष्केशं शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तः तम् । हरित इत्यादित्याश्वानां संज्ञा । 'हरित आदित्यस्येति' निघण्टावुक्तत्वात् । शोचिष्केशं 'शुच दीप्तौ' 'अर्चिशुचिहुसृपोत्यादिना ( उ० २ । १०८ ) इसिप्रत्यान्तोऽन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते । 'नित्यं समासेनुत्तरपदस्थस्य' ( पा० ८ । ३ । ४५ ) इति विसर्जनीयस्य षत्वम् ॥ ८ ॥

नवमीमृचमाह—

मं०—अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।

ताभिर्याति स्वयुक्तिभिः ॥ ९ ॥

प०—अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः ।

ताभिः । याति । स्वयुक्तिऽभिः ॥ ९ ॥

भा—सूरः सर्वस्य प्रेरकः सूर्यः शुन्ध्युवः शोधिकाः अश्वस्त्रियः तादृशीः सप्त सप्तसंख्याकाः अयुक्त स्वरथे योजितवान्। कीदृश्यः, रथस्य नप्त्यः न पातयित्र्यः याभिर्युक्ताभिः रथो याति न पतति तादृशीभिरित्यर्थः। एवं भूताभिस्ताभिरश्वस्त्रीभिः स्वयुक्तिभिः स्वकीययोजनेन रथे सम्बद्धाभिर्याति यज्ञगृहं प्रत्यगाच्छति अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः॥ अयुक्त 'युजिर् योगे' स्वरितेत्त्वात् कर्त्रभिप्राये आत्मनेपदम् लुङि च्लेः सिच् 'एकाचः' (पा० ७। २। १०) इतीट्प्रतिषेधः। 'लिङ्सिचावात्मनेपदेषु' (पा० १। २। ११) इति सिचः कित्त्वाल्लघूपधगुणाभावः। 'झलो झलि' (पा० ८। २। २६) इति सिचः सकारलोपः। 'चोः कुः' (पा० ८। २। ३०) इति कुत्वम्। शुन्ध्युवः 'शुन्ध विशुद्धौ' 'यजिमनिशुन्धिदसिजनिभ्यो युः' (उ० ३। २०) इति युप्रत्ययः। शसि 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (वार्ति० ६। ४। ७७) इति उवङादेशः। सूरः 'षू प्रेरणे' 'सुसूधाग्टधिभ्यः क्रन्' (उ० २। २४) इति क्रन्प्रत्ययः। नित्वादाद्युदात्तत्वम्। नप्त्यः न पातयतीत्यर्थे 'नप्तृनेष्टृ' इत्यादिना (उ० २। ९६) उणादिषु नप्तृशब्दस्तृजन्तो निपातितः। 'ऋन्नेभ्यो ङीप्' (पा० ४। १। ५) इति ङीप्। यणादेशे 'उदात्तयणो हल्पूर्वात्' (पा० ६। १। १७४) इति ङीप उदात्तत्वम्। 'सुपां सुपो भवन्तीति' (पा० ७। १। ३९) शसो जसादेशः। ततो यणादेशे 'उदात्तस्वरितयोर्यणः' (पा० ८। २। ४) इति

स्वरितत्वम् । रेफलोपश्छान्दसः । उक्तं च "द्वौ चापरौ वर्णविकारनाशौ" ( काशिका ६ । ३ । १०९ ) इति । शाखान्तरे ( तै० ब्रा० २ । ४ । ५ ) तु 'नप्त्र्' इत्येव पठ्यते । स्वयुक्तिभिः स्वकीयाः सूर्यसम्बन्धिन्यः युक्तयो योजनानि यासां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ९ ॥

अवभृथेष्टौ होत्रका जलान्निष्क्रम्य उद्वयं तमसस्परीति मन्त्रं ब्रूयुः । तथा च पत्नीसंयाजेश्चरित्वेति खण्डे सूत्रितम् ( आश्व० ६ । १३ ) उद्वयं तमसस्परीति, इदेत्येति ॥

तामेतां सूक्ते दशमीमृचमाह—

मं०—उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।

देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

प०—उत् । वयम् । तमसः । परि । ज्योतिः । पश्यन्तः । उत्ऽतरम् । देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ॥ १० ॥

भा—वयमनुष्ठातारः तमसस्परि तमस उपरि रात्रेरूर्ध्वं वर्तमानं तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः । तथा चाम्नायते ( तै० सं० ५ । १ । ८ । ६ ) उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्तीति । ज्योतिस्तेजस्विनम् । उत्तरं उद्गततरम् उत्कृष्टतरं वा । देवत्रा देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यन्तः स्तुतिभिर्हविर्भिश्च उपासीनाः सन्तः उत्तमं उत्कृष्टतमं ज्योतिः सूर्यरूपं अगन्म प्राप्नवाम । तथा च श्रूयते ( तै० सं० ५ । १ । ८ ) अगन्म

ज्योतिरुत्तममित्याह असौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छतीति। युक्तं चैतत् 'तं यथा यथोपासते तदेव भवन्तीति श्रुत्यन्तरात्॥ तमसस्परि 'पञ्चम्याः परावध्यर्थे' (पा० ८।३।५१) इति विसर्जनीयस्य सत्वम्। ज्योतिष्पश्यन्तः 'इसुसोः सामर्थ्ये' (पा० ८। ३।४४) इति विसर्जनीयस्य षत्वं। व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते। देवत्रा 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति' (पा० ५।४।५६) सप्तम्यर्थे त्राप्रत्ययः। प्रत्ययस्वरः। अगन्म 'छन्दसि लुङ्लङ्लिटः' (पा० ३।४।६) इति प्रार्थनायां लङि 'बहुलं छन्दसि' (पा० २।४।७३) इति शपो लुक्। 'म्वोश्च' (पा० ८।२।६५) इति धातोर्मकारस्य नकारः। अड़ागम उदात्तः। पादादित्वान्निघाताभावः। उत्तमं तमपः पित्वादनुदात्तत्वे प्राप्ते उत्तमशश्वत्तमौ सर्वत्र' (ग० सू० ६।१।१६०) इत्युञ्छादिषु पाठात् अन्तोदात्तत्वम्॥ १०॥

उद्यन्नित्ययं तृचो रोगशान्त्यर्थः। तथाचानुक्रमण्यामुक्तम्'अन्त्यस्तृचो रोगघ्न उपनिषदिति। युक्तं चैतत्। यस्मादनेन तृचेन त्वग्दोषशान्तये प्रस्कण्वः सूर्यमस्तौत्। तेन तृचेन स्तुतः सूर्यः तमृषिं रोगान्निरगमयत्। तस्मादिदानीमपि रोगशान्तये अनेन तृचेन सूर्य उपासनीयः। तदुक्तं शौनकेन—

उद्यन्नद्येतिमन्त्रोऽयं सौरः पापप्रणाशनः।
रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः॥ इति॥

तृचस्याद्यां सूक्ते एकादशीमृचमाह—

मं०— उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम्।
हृद्रोगं मम सूर्य हरिमाणं च नाशय॥११॥

प०—उत्ऽयन् । अद्य । मित्रऽमहः । आऽरोहन् । उत्ऽतराम् । दिवम् । हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥ ११ ॥

भा०—हे सूर्य सर्वस्य प्रेरक मित्रमहः सर्वेषामनुकूलदीप्तियुक्त अद्यास्मिन् काले उद्यन् उदयं गच्छन् उत्तरां उन्नततरां दिवमन्तरिक्षं आरोहन् आभिमुख्येन प्राप्नुवन् । यद्वा दिवमन्तरिक्षं उत्तरामारोहन् उत्कर्षेण प्राप्नुवन् । एवं विधस्त्वं मम हृद्रोगं हृदयगतमन्तरं रोगं हरिमाणं शरीरगतकान्तिहरणशीलं वाह्यं रोगं । यद्वा शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः । तदुभयमपि नाशय मां स्तोतारं उभयविधाद्रोगान्मोचयेत्यर्थः ॥ मित्रमहः मित्रमनुकूलं महस्तेजो यस्यासौ आमन्त्रितनिघातः । उत्तरां उदित्यनेनोपसर्गेण स्वसंसृष्टधात्वर्थो लक्षते । तस्मादातिशायनिकस्तरप् । प्रथमपक्षे अन्तरिक्षविशेषणत्वेन द्रव्यप्रकर्षप्रतीतेराम् न भवति । द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यत इति 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' ( पा० ५ । ४ । ११ ) इत्यामुः । प्रथमपक्षे टाप्तरपोः पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । द्वितीये तु आम्प्रत्ययस्य सति शिष्टत्वात्तस्यैव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् ॥ वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगणः । हृद्रोगं 'वा शोकष्यञ्रोगेषु' ( पा० ६ । ३ । ५१ ) इति हृदयशब्दस्य हृदादेशः । मम 'युष्मदस्मदोर्ङसि' ( पा० ६ । १ । २११ ) इत्याद्युदात्तत्वम् । हरिमाणं 'हृञ् हरणे' 'जनिहृभ्यामिमनिन्' ( उ० ४ । १४८ ) इत्यौणादिक इमनिन् प्रत्ययः । व्यत्ययेनान्तोदात्तत्वम् । यद्वा हरिच्छब्दस्य वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ्च' ( पा० ५ । १ । १२३ ) इति चकारादिमनिन्

प्रत्ययः। 'इष्ठेमेयः सु' इत्यनुवृत्तौ 'टेः' (पा० ६।४।१५५) इति टिलोपः ॥ ११ ॥

द्वादशीमृचमाह—

मं०—शुकेषु मे हरिमाणं रोपणाकासु दध्मसि।

अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥

प०—शुकेषु। मे। हरिमाणम्। रोपणाकासु। दध्मसि। अथो इति। हारिद्रवेषु। मे। हरिमाणम्। नि। दध्मसि ॥ १२ ॥

भा०—मे मदीयं हरिमाणं शरीरगतं हरिद्वर्णस्य भावं शुकेष, तादृशं वर्णं कामयमानेषु पक्षिषु। तथा रोपणाकासु (शा) सारिकासु पक्षिविशेषेषु दध्मसि स्थापयामः। अथो अपि च हारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णवत्सु मे मदीयं हरिमाणं निदध्मसि निदध्मीमहि। स च हरिमा तत्रैव सुविनाशतां अस्मान् मा बाधिष्टेत्यर्थः। दध्मसि 'इदन्तोमसिः' (पा० ७।१।४६) इति मस इकारागमः ॥ १२ ॥

त्रयोदशीमृचमाह—

मं०—उदगादयमादित्यो विश्वेन सहसा सह।

द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥१३॥८

प०—उत्। अगात्। अयम्। आदित्यः। विश्वेन।

सहसा । सह । द्विषन्तम् । मह्यम् । रन्धयन् । मो इति । अहम् । द्विषते । रधम् ॥ १३ ॥ ८ ॥

भा० अयं पुरोवर्ती आदित्यः अदितेः पुत्रः सूर्यः विश्वेन सहसा सर्वेण बलेन सह उदगात् उदयं प्राप्तवान् । किं कुर्वन्, मह्यं द्विषन्तं रन्धयन् ममोपद्रवकारिणं रोगं हिंसन् । अपि च अहं द्विषते अनिष्टकारिणे रोगाय मो रधम् । नैव हिंसां करोमि । सूर्य एवास्मदनिष्टकारिणं रोगं विनाशयत्वित्यर्थः ॥ अगात् एतेर्लुङि 'इणो गा लुङि' ( पा० २ । ४ । ४५ ) इति गादेशः । गातिस्थेति ( पा० २ । ४ । ७७ ) सिचो लुक् । आदित्यः 'दित्यदित्यादित्येति' ( पा० ४ । १ । ८५ ) अपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । रन्धयन् 'रध हिंसासंराध्योः' ण्यन्ताल्लटः शतृ । 'रधिजभोरचि' (पा० ७ । १ । ६१) इति णौ धातोर्नुमागमः । मो मा उ निपातद्वयसमुदायो मैवेत्यस्यार्थे । 'ओत्' (पा० १ । १ । १५) इति प्रगृह्यत्वे 'प्लुतप्रगृह्या अचि' ( पा० ६ । १ । १२५ ) इति प्रकृतिभावः । द्विषते 'शतुरनुमः' ( पा० ६ । १ । १७३ ) इति विभक्तेरुदात्तत्वम् । रधम् रधेर्लुङि पुषादित्वात् च्लेरङादेशः ।'रधिजभोरचीति धातोर्नुम् । 'अनिदितां०' ( पा० ६ । ४ । २४ ) इत्यनुषङ्गलोपः 'न माङ्योगे' ( पा० ६ । ४ । ७४ ) इत्यडभावः ॥ १३ ॥

इति प्रथमस्य चतुर्थेऽष्टमो वर्गः ॥ ८ ॥

इति प्रथमे मण्डले नवमोऽनुवाकः ॥ ९ ॥ पञ्चाशत्तमं सूक्तम् ॥

प्रथमे दशोत्तरशततमं ( संग्रहे नवमं ) सूक्तम् ।

ततं म इति नवर्चं पञ्चमं सूक्तम् । कुत्सस्यार्षं ऋभुदेवताकम्, पञ्चमीनवम्यौ त्रिष्टुभौ । शिष्टाः सप्त जगत्यः । तथा चानुक्रान्तम्-- 'ततं

नवाभवं तु पञ्चम्यन्त्ये त्रिष्टुभौ इति। अभिप्लवषड़हस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदमार्भवनिविद्धानम्। सूत्रितं (आश्व० ७।७) च तृतीयस्येति खण्डे-ततं मे अप इति वैश्वदेवमिति॥

तत्र प्रथमामृचमाह—

मं० ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते। अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः॥ १॥

प०—ततम्। मे। अपः। तत्। ऊम् इति। तायते। पुनरिति। स्वादिष्ठा। धीतिः। उचथाय। शस्यते। अयम्। समुद्रः। इह। विश्वऽदेव्यः। स्वाहाऽकृतस्य। सम्। ऊम् इति। तृप्णुत। ऋभवः॥ १॥

भा०—हे ऋभवः ने मया अपः अग्निष्टोमादिरूपं कर्म ततं विस्तारितं बहुशः पूर्वमनुष्ठितम्। तदु तदेव पुनस्तायते विस्तार्यते अनुष्ठीयत इत्यर्थः। तत्र स्वादिष्ठा स्वादुतमा अतिशयेन प्रीतिकरी धीतिः स्तुतिश्च उचथाय स्तुत्याय शस्यते पठ्यते। अपि च इहास्मिन्यागे समुद्रः समुन्दनशीलोयं सोमरसः विश्वदेव्यः सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा सम्पादितः। तस्य स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन समु तृप्णुत सम्यगेव तृप्ता भवत॥ ततम्

'तनु विस्तारे' निष्ठायां 'यस्य विभाषा' ( पा० ७ । २ । १५ ) इतीट्प्रतिषेधः । 'अनुदात्तोपदेशे' त्यादिना ( पा० ६ । ४ । ३७ ) अनुनासिकलोपः । अपः 'आप्लृ व्याप्तौ' 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' ( उ० ४ । २०७ ) इत्यसुन् धातोर्ह्रस्वश्च । तायते 'तनोतेर्यकि' ( पा० ६ । ४ । ४४ ) इत्यात्वम् । स्वादिष्ठा स्वादुशब्दादातिशायनिक इष्ठन् 'टेः' ( पा० ६ । ४ । १५५ ) इति टिलोपः । उवथाय 'वच परिभाषणे' औणादिकोऽथक्प्रत्ययः 'वचिस्वपी' त्यादिना ( पा० ६ । १ । १५ ) सम्प्रसारणम् । समुद्रः 'उन्दी क्लेदने 'स्फायितञ्ची' त्यादिना ( उ० १ । १७० ) रक् । 'अनिदिता' मिति ( पा० ६ । ४ । २४ ) नलोपः । विश्वदेव्यः देवार्हो भागो देव्यः 'छन्दसि च' ( पा० ५ । १ । ६७ ) इति यः । विश्वे सर्वे देव्या यस्मिन् सोमे 'बहुव्रीहौ विश्वं संज्ञायाम्' ( पा० ६ । २ । १०६ ) इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । स्वाहाकृतस्य स्वाहाशब्दस्य ऊर्यादित्वेन गतित्वात् ( पा० १ । ४ । ६१ ) गतिरनन्तरः' ( पा० ६ । २ । ४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । तृपत् 'तृप प्रीणने' 'स्वादिभ्यः श्नुः' ( पा० ३ । १ । ७३ ) । ऋभव इत्यनेन संहितायां 'ऋत्यकः' ( पा० ६ । १ । १२८ ) इति प्रकृतिभावः ॥ १ ॥

द्वितीयामृचमाह—

मं० आभोगयं प्र यदिच्छन्त ऐतनापाकाः प्राञ्चो मम केचिदापयः । सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम् ॥ २ ॥

प०—आऽभोगयम् । प्र । यत् । इच्छन्तः । ऐतन । अपाकाः । प्राञ्चः । मम । के । चित् । आपयः । सौधन्वनासः । चरितस्य । भूमना । अगच्छत । सवितुः । दाशुषः । गृहम् ॥ २ ॥

भा०—हे ऋभवः अपाकाः परिपक्वज्ञानाः प्राञ्चः पूर्वकालीना मम आपयः प्रापयितारो मदीया ज्ञातयः केचित् एवं भूता ये केचन यूयं आभोगयं उपभोग्यं सोमं इच्छन्तः यद्यदा प्रैतन तपश्चरितुमरण्यं गतवन्तः । ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः तदुक्तं यास्केन ( निरु० ११ । १६ ) ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुरिति । कुत्सोऽप्याङ्गिरसः अतस्तेन मदीया ज्ञातय इत्युक्तम् । हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसः भूमना भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य सम्बन्धि यज्ञगृहमगच्छत । तपसा लब्धसोमाः सन्तः कृतपाना यूयं गतवन्तः । यद्वा दाशुषः प्रातः सवनादिष्वग्न्यादिभिरपसारितेभ्यः ऋभुभ्यः सोमपानं दत्तवतः सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यं अगच्छत प्राप्ताः । एतत्सर्वमार्भवं शंसतीत्यादौ (ऐ० ब्रा० ३ । ३०) विस्पष्टमाम्नातम् ॥ आभोगयम् आसमन्ताद्भोग आभोगः तदर्हं आभोगयः । 'छन्दसि च' ( पा० ५ । १ । ६७ ) इति यः । 'यस्ये' ति ( पा० ६ । ४ । १४८) लोपाभावश्छान्दसः । व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वा आङ्पूर्वाद्भुजेरौणादिकः कर्मणि इप्रत्ययः कुत्वं च । अमि व्यत्ययेन गुणः । ऐतन 'इण गतौ' लङि मध्यमबहुवचनस्य थस्य तादेशः 'तप्-

नप्तनथनाश्च' ( पा० ७ । १ । ४५ ) इति तस्य तनबादेशः । आडागमो वृद्धिश्च । आपयः आप्नोतेरौणादिक इप्रत्ययः । भूमना बहुशब्दात् पृथ्वादिलक्षण इमनिच् ( पा० ५ । १ । १२२ ) । 'बहो' रिति ( पा० ६ । ४ । १५८ ) इकारलोपो बहोर्भभावश्च । संज्ञापूर्वकस्य विधेरनित्यत्वादलोपाभावः ॥ २ ॥

तृतीयामृचमाह—

मं०—तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयन्त ऐतन। त्यं चिच्चमसमसुरस्य भक्षणमेकं सन्तमकृणुता चतुर्वयम् ॥३॥

प०—तत्। सविता। वः। अमृतऽत्वम्। आ। असुवत्। अगोह्यम्। यत्। अश्रवयन्तः। ऐतन। त्यम्। चित्। चमसम्। असुरस्य। भक्षणम्। एकम्। सन्तम्। अकृणुत। चतुःऽवयम् ॥ ३ ॥

भा०—हे ऋभवः तत् तदानीं सविता सर्वस्य प्रेरको देवो वो युष्माकं अमृतत्वं देवत्वं आसुवत् आभिमुख्येन प्रेरितवान् दत्तवानित्यर्थः। यद्यदा यूयमगोह्यं गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं अश्रवयन्तः अपेक्षितं सोमपानं विज्ञापयन्तः सन्तः ऐतन आगच्छत। तदानीमिति पूर्वेणान्वयः। यस्माद्यूयं देवैराज्ञापिताः सन्तः असुरस्य त्वष्टुः

संबन्धिनं तेन निर्मितमित्यर्थः। भक्षणं सोमपानसाधनं त्वं तं चमसं एकं चित् असहायमेव सन्तं चतुर्वयं चतुर्व्यूहं अकृणुत कृतवन्तः। सृष्ट्याद्यौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवन्त इत्यर्थः॥ असुवत् 'षू प्रेरणे' तौदादिकः। अवयन्तः 'अ॒ अवने' छान्दसो वृद्ध्यभावः। एतेन लङि मध्यमबहुवचनस्य तादेशे 'तप्तनप्तनथनाश्च' (पा० ७।१।४५) इतितनबादेशः। भक्षणम् करणे ल्युट्। अकृणुत 'कृवि हिंसाकरणयोश्च' लङि मध्यमबहुवचने 'धिन्विकृण्व्योरच' (पा० ३।१।८०) इत्युप्रत्ययः। चतुर्वयम् वया अवयवाः चत्वारोऽवयवा यस्य स तथोक्तः॥३॥

चतुर्थीमृचमाह—

मं० विष्ट्वी शमी तरणित्वेन वाघतो मर्त्तासः सन्तो अमृतत्वमानशुः। सौधन्वना ऋभवः सूरचक्षसः सम्वत्सरे समपृच्यन्त धीतिभिः॥४॥

प०—विष्ट्वी। शमी। तरणिऽत्वेन। वाघतः। मर्तासः। सन्तः। अमृतऽत्वम्। आनशुः। सौधन्वनाः। ऋभवः। सूरऽचक्षसः। संवत्सरे। सम्। अपृच्यन्त। धीतिऽभिः॥४॥

भा०—वाघतः ऋत्विङ्नामैतत् अत्र च सामर्थ्यात्तद्वन्तो लक्ष्यन्ते। ऋत्विग्भिरुपेता ऋभवः। शमी कर्मनामैतत्। यागदानादीनि कर्माणि

अन्यान्यपि "एकं चमसं चतुरः कृणोतन" (ऋ०सं०१।१६१।२) इत्यादिना देवैरुक्तानि कर्माणि। तरणित्वेन तरणिरिति क्षिप्रनाम। क्षिप्रत्वेन शैघ्र्येण विष्ट्वी यद्यप्येतत् कर्मनाम, तथाप्यत्र क्रियापरं, व्याप्य कृत्वेत्यर्थः। एवं कर्माणि कृत्वा मर्तासो मनुष्या अपि सन्तः अमृतत्वं देवत्वं आनशुः आनशिरे कै: कर्मभिर्लेभिरे। देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते ऋभवः सम्वत्सरे संवत्सरावयवभूते वसन्तादिकाले अनुष्ठेयैर्धीतिभिरग्निष्टोमादिकर्मभिः समपृच्यन्त संयुक्ता अभवन् हविर्भागार्हा बभूवुरित्यर्थः। अत्र निरुक्तम् (११।१६) कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तो अमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञाना वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः। ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुरिति॥

विष्ट्वी 'विष्लृ व्याप्तौ' 'स्नात्व्यादयश्च' (पा० ७।१।४९) इति क्त्वाप्रत्ययस्य ईकारान्तादेशः। शसो 'सुपां सुलुग्' ति (पा० ७।१।३९) शसो लुक्। आनशुः 'अशू व्याप्तौ' व्यत्ययेन परस्मैपदम्। 'अश्नोतेश्च' (पा० ७।४।७२) इत्यभ्यासादुत्तरपदस्य नुडागमः। अपृच्यन्त 'पृची संपर्के' कर्मणि लङ्॥ ४॥

पञ्चमीमृचमाह—

मं०—क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम्। उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः॥ ५॥

प० क्षेत्रम्ऽइव। वि। ममुः। तेजनेन। एकम्। पात्रम्

ऋभवः। जेहमानम्। उपऽस्तुताः। उपऽमम्। नाधमा-
नाः। अमर्त्येषु। श्रवः। इच्छमानाः॥ ५॥ ३०॥

भा०—उपस्तुता समीपस्थैः ऋषिभिः स्तुताः ऋभवः जेहमानम् सोम० क्रियां प्रति प्रयतमानं एकमसहायं पात्रं पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टय-रूपेण कर्तुं विममुः विशेषेण मानं कृतवन्तः। किमिच्छन्तः उपमं सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं नाधमाना याचमानाः। एत-देव विवृणोति अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवो हविर्लक्षणमन्नं इच्छमानाः इच्छन्तो देवैः सह सोमपानं कामयमानाः तल्लाभाय चतुर-श्चमसानकार्षुरित्यर्थः॥

ममुः 'माङ् माने शब्दे च' व्यत्ययेन परस्मैपदम्। तेजनेन 'अणोऽप्र गृह्यस्यानुनासिकः' (पा० ८। ४। ५७) इत्यनवसाने व्यत्ययेनाकार-स्यानुनासिकत्वम्। ईषाअक्षादित्वात् (वार्ति ६। १। १२७) प्रकृतिभावः। जेहमानम् 'वेहृ जेहृ बाहृ प्रयत्ने' भौवादिकः अनुदात्तेत्त्वादात्मनेपदम्। उपस्तुताः 'गतिरनन्तरः'(पा० ६। २। ४९) इति गतेः प्रकृतिस्वरत्वम्। उपमम्। 'माङ् माने' 'आतश्चोपसर्गे' (पा० ३। १। १३६) इति क-प्रत्ययः। इच्छमानाः व्यत्ययेनात्मनेपदम्॥ ५॥ इतिप्रथमस्य सप्तमे त्रिंशो वर्गः॥ ३०॥

षष्ठीमृचमाह—

मं०—आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं
जुहवाम विद्मना। तरणित्वा ये पितुरस्य सश्चिर
ऋभवो वाजमरुहन्दिवो रजः॥ ६॥

प०—आ । मनीषाम् । अन्तरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतम् । जुहवाम । विद्मना । तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजम् । अरुहन् । दिवः । रजः ॥ ६ ॥

भा०—अन्तरिक्षस्य अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यो नृभ्यः यज्ञस्य नेतृभ्यः ऋभुभ्यः । ऋभवो हि यज्ञस्य नेतारः । तेन हि देवत्वं प्राप्ताः । यद्वा अन्तरिक्षस्य लोकस्य नेतृभ्यः । मध्यमे स्थाने ह्येते पठ्यन्ते तादृशेभ्यः स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविः आ जुहवाम । मर्यादायामाकारः । यथाशास्त्रं प्रयच्छाम । एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्म इति शेषः । अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्यास्य सूर्यस्य तरणित्वा तरणित्वानि तरणकाशलानि सश्चिरे सूर्यरश्मिभूताः सन्तः प्रापुः । तदुक्तम्—"आदित्यरश्मयोप्यृभव उच्यन्त" ( निरु० ११ । १६ ) इति । ते ऋभवः दिवो रजः शब्दो लोकवाची । द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबन्धिनं वाजं सोमलक्षणमन्नं अरुहन् । यागदानादिभिः कर्मभिः अन्यैश्च देवोक्तैश्चमसचतुष्टयकरणादिकैः प्राप्नुवन् ॥ स्रुचा इव 'सावेकाचः' (पा० ६ । १ । १६८ ) इति विभक्तेरुदात्तत्वम् । जुहवाम 'हु दानादनयोः' लोटि 'आडुत्तमस्य पिच्च' ( पा० ३ । ४ । ९२ ) इति आडागमः । विद्मना 'विद ज्ञाने' औणादिको मनिः । 'न संयोगाद्वमन्तात्' ( पा० ६ । ४ । १३७ ) इत्यल्लोपाभावः । तरणित्वा 'तॄ प्लवनसंतरणयोः' 'अर्तिसृधृधम्यश्यवितृभ्योऽनिः' (उ० २ । १०२) इतिकर्तर्यनिप्रत्ययः । तस्य भावस्तरणित्वम् । 'शेश्छन्दसि बहुलम्' ( पा० ६ । १ । ७०) इति शेर्लोपः । सश्चिरे 'सश्चु-

षह्ज गता' वित्यत्र सश्विमप्येके पठन्ति । व्यत्ययेनात्मनेपदम् । 'द्विर्वचन-प्रकरणे छन्दसि वेति वक्तव्य' मिति ( वार्त्ति० ६ । १ । ८) वचनात् द्विर्वचनाभाव: । इरेचश्वित्वादन्तोदात्तत्वम् । यद्वृत्तान्नित्यम्' ( पा० ८ । १ । ६६ ) इति निघातप्रतिषेध: । अरुहन् 'रुह बीजजन्मनि प्रादुर्भावे च' लुङि 'कृमृदृरुहिभ्यश्छन्दसि' (पा० ३ । १ । ५९ ) इति च्लेरङादेशः । दिव: 'ऊडिद' मित्यादिना ( पा० ६ । १ । १७१ ) विभक्तेरुदात्तत्वम् । रज: 'रञ्ज रागे' रजन्त्यस्मिन्निति रजो लोक: । तदुक्तम्-'लोका रजांस्युच्यन्ते ( नि० ४ । १९) इति । औणादिकोऽधिकरणेऽसुन् 'रजकरजनरजस्सूपसंख्यान' मिति (वार्ति० ६ । ४ । ३४ ) नलोपः । 'सुपां सुलुग्' ( पा० ७ । १ । ३९ ) इति षष्ठ्या लुक् ॥ ६ ॥

सप्तमीमृचमाह—

मं०—ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः । युष्माकं देवा अवसाहनि प्रिये ३ भि तिष्ठेम पृत्सुतीरसुन्वताम् ॥ ७ ॥

प०—ऋभु: । न: । इन्द्रः । शवसा । नवीयान् । ऋभु: । वाजेभि: । वसुऽभि: । वसु: । ददि: । युष्माकम् । देवा: । अवसा । अहनि । प्रिये । अभि । तिष्ठेम । पृत्सुती: । असुन्वताम् ॥ ७ ॥

भा०—ऋभुर्विभ्वा वाज इति त्रयः सुधन्वन: पुत्राः । तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुर्नोऽस्माकं इन्द्रः परमेश्वरः अस्मा-

कं रक्षक इत्यर्थः । यद्वेन्द्र एव प्रसङ्गादुरु भातीतिनैरुक्तव्युत्पत्त्या ( नि० ११ । १५ ) ऋभुरिति स्तूयते । अपि च वाजेभिः वाजैः अस्मभ्यं दातव्यैरन्नैः वसुभिः निवासहेतुभिः धनैश्च ऋभुर्वसुरस्माकं निवासयिता । अत एव ददिः तेषामन्नानां धनानां च दाता भवतु । परोक्षवर्चः प्रत्यक्षकृतः । हे देवा दानादिगुणयुक्ताः ऋभुप्रभृतयः । युष्माकं संबन्धिना अवसा रक्षणेन युक्ते प्रिये अस्माकमनुकूले अहनि दिवसे वर्तमाना वयं असुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां पृत्सुतीः सेना अभितिष्ठेम ॥ नवीयान् नवशब्दादातिशायनिक ईयसुन् । वाजेभिः 'बहुलं छन्दसि' ( पा० ७ । १ । १० ) इति भिस ऐस्भावः । वसुः 'वस निवासे' अस्मादन्तर्भावितण्यर्थात् 'शृस्वृस्निहीत्यादिना ( उ० १ । १० ) उप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वम् । ददिः 'डुदाञ् दाने' 'आदृगमहन' इति ( पा० ३ । २ । १७१ ) किप्रत्ययः । लिड्वद्भावादृद्विर्भावादि । 'आतो लोप इटि च' ( पा० ६ । ४ ६४ ) इत्याकारलोपः ॥ ७ ॥

अष्टमीमृचमाह—

मं०—निश्चर्मण ऋभवो गामपिंशत संवत्सेनासृजता मातरं पुनः । सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ॥ ८ ॥

प०—निः । चर्मणः । ऋभवः । गाम् । अपिंशत । सम् । वत्सेन । असृजत । मातरम् । पुनरिति । सौधन्वनासः ।

सुऽअपस्यया । नरः । जिव्री इति । युवाना । पितरा । अकृणोतन ॥ ८ ॥

भा०—पुरा कस्य चिदृषेर्धेनुर्मृता स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभून् तुष्टाव ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति । अयमर्थः पूर्वार्धेन प्रतिपाद्यते । हे ऋभवः यूयं चर्मणः चर्मणा त्वचा तृतीयार्थे षष्ठी गां धेनुं निरपिंशत निःशेषेणाश्लिष्टां संयुक्तामकुरुत । तदनन्तरं मातरं तां गां पुनर्वत्सेन समसृजत संश्लिष्टामकुरुत समगमयतेतियावत् । अपि च हे सौधन्वनासः सुधन्वन आङ्गिरसस्य पुत्राः नरो यज्ञस्य नेतार ऋभवः स्वपस्यया शोभनकर्मेच्छया यागदानाद्याचरणेनेति यावत् । जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतौ अकृणोतन यूयमकृढ्वं ॥

अपिंशत 'पिश अवयवे' तौदादिकः । शे मुचादीनामिति (पा० ७ । १ । ५९ ) नुम् । सौधन्वनासः सुधन्वनः पुत्राः सौधन्वनाः 'अनि' ति (पा० ६ । ४ । १६७ ) प्रकृतिभावः । आज्जसेरसुक्' (पा० ७ । १ । ५० ) 'आमन्त्रितस्य च' (पा० ६ । १ । १९८ ) इत्याद्युदात्तत्वम् । स्वपस्यया शोभनमपः स्वपः तदिच्छा स्वपस्या 'सुप आत्मनः क्यच्' (पा० ३ । १ । ८ ) 'अप्रत्ययात्' (पा० ३ । ३ । १०२ ) इति भावे अकारप्रत्ययः । जिव्री 'जॄष् वयोहानौ' 'जॄशॄस्तॄजागृभ्यः क्विन्' (उ० ४ । ५४ ) 'ऋत इद्धातोः' (पा० ७ । १ । १०० ) इति इत्वम् । रेफवकारयोः स्थानविपर्ययः बहुल वचनात्[१] । 'हलि च' (पा० ८ । २ । ७७ ) इति दीर्घा

१—*Max Müller* महाशयसंपादितपुस्तके तु 'बहुलवचनात्' इत्यस्य दीर्घाभावे हेतुताऽङ्गीकृता । तथा च वर्णविपर्यये हेतुश्चिन्त्यः । वर्णविपर्यये हेतुत्वाङ्गीकारे तु दीर्घाभावेप्यनुवर्तनीयमेव ॥ वलोपवारणमपि तद्धेतुकमधिकमङ्गीकरणीयम् ॥

